निघ ३,२०.
तुज्यते या १४,२६ϕ.
तुज्[a]– तुजा उस् २,२५†.
तुज्र[b]– -ज्रः निघ २,२०†.
†तुज्यमान– -नासः अ ४८, १०६; निघ २,१५.
†तुञ्ज[c]– -ञ्जः निघ ४,३; या ६, १७ϕ; -ञ्जेऽ-ञ्जे या ६,१८ϕ.
†तु(तुजान[d]– -नः अ ४८,१०६; निघ २,१५; या ६,२०ϕ; क्षा ७,२७.
तुजि[e]– -जिः अ ४८, १०६; निघ २,१५.
†?तुज.[f] शांश्री १८,३,२.
†तुजि[g]– -जये या १२,४५ϕ.
√तुञ्ज् पाधा. भ्वा. पर. पालने; चुरा. पर. भाषार्थे.
√तुट् पाधा. तुदा. पर. कलहकर्मणि.
तुटि–>तुट्या(टि-आ)कार[f]– -रम् वैशु ४,१३ : ८.
√तुड् पाधा. भ्वा., तुदा. पर. तोडने[g].
√तुण् पाधा. भ्वा.; तुदा.पर.कौटिल्ये.
√तुण्ड् पाधा. भ्वा. आत्म. तोडने[h]
तुण्ड[a]– पा, पाग ५, २,१२७[l]; -ण्डैः कप ६४,७,९.
तुण्डिक[a]– -कः काश्रा ३,४,१†.
तुण्डेल[a]– -रम् काश्रा ३,४,१†.
तुण्डदेव[j]–(> °व-भक्त– पा.) पाग ४,२,५४.
तुण्डि– पाउ ४, ११८; पाग ५,२,९७[k].
तुण्डि-भ– पा ५,२,१३९[l].
तुण्डिकेर[l]– -रः माशृ १,२२:३†[m].
तुण्डिल– पाउ १,५४[n]; पा ५, २, ९७[o]; -लः कौशृ ४, ४, १९; शांशृ ४, १९,३[p], -लस्य काशृ ७०, ४[q].
√तुत्थ् पाधा. चुरा. उभ. आवरणे.
तुत्थ– पाउ २,७[r].
तुथ[s]– -थः शांश्री ६, १२, १७; आपश्रौ; माश्री २,४,१,६[t].
तुथ्य[u]–>तुथ्या(थ्य-आ)ग्निवैश्यौ (श्य-औ)जयान– -नानाम् हिश्री २१,३,१०[n].
√तुद्[v] पाधा. तुदा. उभ. व्यथने, तोतुद्येते कौसू १०७,२†.
१तुद[w]– -दस्य या ५,७.
तुदमान– -नाः निघ ४३,१५.
तु(न>)न्ना– -न्ना या ९,२६.
तुन्न-वत्– -वत् या ४,९.
तोत्त्र[x]– पा ३,२,१८२; -त्त्रेण कौसू १४,९.
†तोद[y]– -दः निघ ४, २; या ५, ७ϕ, -दस्य या ५, ७; -देन कौसू १०७,२[z?].
२तुद[z]–(>तौदेय– पा.) पाग ४, १,१२३.
तुनुपूर्व– तु द्र.
१तुन्द[a1]– पाउ ४,९८; पाग ५, २: ११७;१२७.
२तुन्द– पा ५, २,१२७.
तुन्द-परिमृज– पा, पावा ३,२,५.
तुन्द-वत्– पा ५,२,११७.
तुन्दा(न्द-आ)दि– -दीनाम् पावा ५,२,९७.
तुन्दिक–, तुन्दित्– पा ५,२,११७.
तुन्दिल– पा ५,२,११७, -लः माशृ. २,१०,४.
तुन्दि[b1]–>°भ्रिम– पा ५,२,१३९.
तुन्य[c1]– -न्यम् अप १,७,१.
√तुप्[,म्प्],तुफ्[,म्फ्] पाधा. भ्वा., तुदा. पर. हिंसायाम्.
√तुभ्[d1] पाधा. भ्वा. आत्म., दिवा. क्र्या. पर. हिंसायाम्.
तुभ्य– युष्मद्– द्र.
तुम् पाग १,४,५७.
तुमुल[e1]– पाउभो २,३, ११०; -लः. शांश्री ४,३,३; लाश्री २,१,३; अप ७०[c],२१,२; ५; -लम् अप. ५०,७,१; ७०[c],३,१.
√तुम्प् √तुप्, √तुम्फ् टि. च द्र.
√तुम्फ् √तुप् द्र.
√तुम्ब् पाधा. भ्वा.पर. अर्दने; चुरा[f1]. पर. अदर्शने.

a) वैप १ द्र.। b) = वज्र-। कर्तरि रक् प्र. (तु. दे.)। c) वैप १ निर्दिष्टयोः समावेशः द्र.। d) पाठः? शोधार्थे वैप १,१४४१ d द्र.। e) वैप १,१४८५ B द्र.। f) विप. (मृत्पीठ-)। बस. पूप. = त्रुटि-(अर्थः? [तु. C. टि.])। g) √तुड् इत्यपि BPG.। h) चुरा. पर. प्रेरणे इति BPG.। i) तु. पागम.। j) = मनुष्यजाति-विशेष- इति MW.। k) = तुन्दि- इति पागम.। l) = बालग्रह-विशेष-। व्यु. ?। m) सपा. तुण्डिकेर <> तौण्डुलेयः <> शाण्डिकेरः इति पाभे.। n) <√तुण्ड् इति। o) <तुण्डि– इति पागम.। p) अर्थः ? = (पिष्टमय-)। तुन्दिल-पुरुष- इति नारायणः। q) = पुरोडाशाकृति- इति देवपालः। r) < √तुद् इति। s) पाभे. वैप १,१४८६ j द्र.। t) = ऋषि-विशेष-। व्यु. ?। u) पाभे. पृ ८०० p द्र.। v) या ५,६;१०,७ परामृष्टः द्र.। w) = तोद-। कर्तरि कः प्र.। x) = प्रतोद-। y) करणे प्र.। z) व्यप.। व्यु. ?। a1) = जठर-। व्यु. ?। b1) = [पृदा-] नाभि-। व्यु. ?। c1) अर्थः व्यु. च ?। d1) पा ३,१,५५ परामृष्टः द्र.। e1) विप.। व्यु. ? <√तु इति क्रमा., √तम् इति पाउभो.। f1) √तुम्प् इत्यपि BPG.।

तुम्बर[a]– -रम् अप ३६,४,२.
तुम्बर-दण्ड– -ण्डः अशां २२,१†; -ण्डेन कौसू ७६,२.
तुम्बुरु[b]– पाउभो २, १,१०२; पाम ४, ३, १०६[c]; -रुणा नाशि १, ५, १४.
तौम्बुरविन्– पा ४,३,१०६.
तुम्बुरु-नारद-वसिष्ठ-विश्वावस्वा(सु-आ)दि– -दयः नाशि २, ७, १२.
†तुम्र[d]– -म्रम् आश्रौ ३,८, १; शांश्रौ १४,२१,२.
√तुर्[d] पाधा. जु. पर. त्वरणे.
†तुर्[d]– तुरम् आपश्रौ ६, २२,१; कौसू ९१,१०.
१तुर[d]– -†०र गौपि ४,६,१६; द्राय ४,४, २; -रः आपश्रौ ६, १७, १२†°; हिश्रौ ६, ६,१६†°; आपमं १,१४,२†; वाग ५,१४; †या ३, २१°; १२,१४ϕ; -रस्य आश्रौ ७, ११, १४; -राणाम् बौश्रौ १३,२०:९†; हिश्रौ २२,३,१६; अप्रा १७,३४; -राय आश्रौ २, १६,११; ३,७,१२†; शांश्रौ १४, १६,९†; २१,५†; ४९,२; हिश्रौ ९, २,२४†; वैताश्रौ ३१,१६.
तुर-गा[f]– -गाः अप ७०[2], ११, ११; -गे विध ९९,११.
तुरं-गा[f]– -गम् विध ५०, २६; ७८, ३४; -गस्य भाग २, ६ : १६.
तुरंग-स्कन्ध– पाशा ४, २, ५१.
तुरं-गम– -मानाम् अप ७०[3], ११,१३.
तुर-या(न>)णा->तौरयाण[g]– -णः निघ ४,२; या ५,१५†ϕ.
तुर-श्रवस्[h]– -वाः साअ १, २६.
तौरश्रवस[i]– -सम् आपश्रौ १४, २०, १; क्षुसू १, ८ : ९; १४; लाश्रौ ७, ३,३; -से काश्रौ २५,१४,१३.
†तु(र>)रा-षा(<सा)ह्[d]– -षाट् आश्रौ ५, १६,२; ६, ३, १; शांश्रौ ९,५,२; बृदे ४,७५; ऋअ २,५; ऋप्रा ३,४,१.
√तुरीय, तुरीयति निघ २, १४†.
तुरण– पाउभो २,२,१२६; पाग ३, १,२७;
तुरण्य->√तुरण्य[j], तुरण्यति या २,२८ϕ†.
†तुरण्यत्– -ण्यतः बौश्रौ ११,८ : २६; १५,२६ : १७.
†तुर्वणि[d]– -णिः निघ ४, ३; या ६,१४ϕ.
तूर्ण– पा ७, २, २८[k]; -र्णः काश्रौ १०,१,८; -र्णम्[l] काश्रौ ८, १, २; २५,१०,२३; भाग २,१० : १६; अप ३५,२,९; ७०[2], १९, ६; ७१,८,२; बृदे २,५८; ३,१६, या २,२८; ४,१५; ५, १६; २५, ६,२०; ८,१३; १०,२७; पाग १, १,३७[o].
तूर्ण-गति[m]– तिः या १२,१४.
तूर्ण-यान[m]– -नः या ५,१५ϕ.
तूर्ण-वनि[n]– निः या ६, १४.
तूर्णा(र्ण-आ)पिन्[o]– -पि या ६, २१.
तूर्णि[d]– पाउ ४,५१; -†र्णिः आश्रौ १, ३,६; शांश्रौ; या ७, २७ϕ; -†र्णिम् आपश्रौ ५, १०, ४; माश्रौ १,५,२,१४; वाश्रौ १,४, २,५; हिश्रौ ३,३,२१.
तूर्ण्य(र्णि-अ)र्थ[d]– -र्थाः आश्रौ ५,१,११†.
२तुर[p]->तौर[q]– -रम् निसू १०,११ : १०; -रेण लाश्रौ १०,२०,१.
तुरा(र-अ)यण– -णम् आश्रौ २, १४, ४; शांश्रौ ३, ११, १५; काश्रौ २४, ७,१; -णेन आपश्रौ २३,१४,१; हिश्रौ १८,४,५२.
तौरायणिक– पा ५,१,७२.
तुरि– पाउभो २,१,१५१.
†तुरीप[d]– -पम् आश्रौ १,१०,५; ३ ८,१; शांश्रौ; या ६,२१ϕ.
तुरीय– प्रमृ. चतुर्– द्र.
तुरुष्क– पाउभो २,२,६.
†तुर्फरि[d]– -री या १३,५ϕ.
†तुर्फरीतु[d]– -तू या १३,५ϕ.
तुर्मिश्[d]– -मिशम् अप १,११,१†.
तुर्य– प्रमृ. चतुर्– द्र.
तुर्यपि– √दृप् द्र.
†तुर्वश[d]– -शाः ऋअ ४८, ७८; निघ २,३; -शाय आश्रौ ९, ५, २; -शे निघ २,१६; ऋअ ४८,७३.
√तुल् पाधा. चुरा. पर. उन्माने, तुल्यते विध १०, ११.

a) =वृक्ष-विशेष- । व्यु. ? । b) व्यप. । व्यु. ? । c) तु. पागम. । d) वैप १ द्र. । e) पाभे. वैप १,१४८७ f द्र. । f) =अश्व- । उस. उप. <√गम्, पूप. भाप. (तु. अभा. प्रमृ.) । g) विप. । बस. पूप. (तूर्ण- [या.]) >स्वार्थिकः अण् प्र. (तु. SEY १०९) । h) =ऋषि-विशेष- । बस. । i) =साम-विशेष- । j) वैप १ द्र. (वैतु. पाप्र. <तुरण- इति) । k) <√त्वर् । l) वा. किवि. । m) विप. । बस. । n) उस. उप. <√वन् । o) उस. उप. <√आप् । p) वैप २,३खं. द्र. । q) =याग-विशेष- ।

तुला[a]– पाग ३, ३, १०४[b]; –स्या वाध २, ४२; बौध १, ५, ७१; विध ८,३६; –ला विध ९,२३; १०,३, –लाम् अप ११,१,१०; शंध ४०५; त्रिध १०,९

तौल्य[c]– -ल्यम् अप ११, १, १५.

तुला-कूट– -टम् अप ९,३,४.

तुला-धार[d]– -रम् विध १०, ८; –रस्य विध १०,९.

तुला-धृत– -तम् वाध २,४७.

तुला-पुंस्[e]– -पुमान् बौध ४,५, २९.

१तुला-पुरुष[e]– -षः विध ४६, २१.

२तुला-पुरुष– >°ष-विधि– -धिम् अप ११,१,१.

तुला-मान[f]– >°न-कूट-कर्तृ– -र्तृ. विध ५,१२२.

तुलामान-प्रतिमान-मनुष्य– -ष्याणि शंध २६२.

तुलामान-प्रतीमान-व्यवहारा-(र-आ)र्थ-संस्थापन– -नम् शंध ३२०.

तुला(ला-आ)रोहण– -णम् शंध २६५.

तुलित– -तः विध १०,१२.

१तुल्य,ल्या– पा ४, ४, ९१; –ल्यः वैगृ ५, ११ : २; बृदे; –ल्यम् वाश्रौ १२, २, ७××; काठश्रौ; –ल्ययोः आपशु २,६; हिशु १, २६; –ल्या काठश्रौ ८८; काश्रौसं २८ : ६; ३१ : १३; अप, –ल्या· काश्रौ १५, ८,३१;१६,१,१०; वैगृ; –ल्यान् माश्रौ ५,२,१२,४; अप २६,४, ५; –ल्यानाम् मीसू ११,१,५५; ६७; –ल्यानि मीसू ४,४, ३९; –ल्याम् वाश्रौ १,१,१,७०; वैगृ ५, ९ : ८; –ल्ये काश्रौसं ३ : ४; ऋत ४,३,८; –ल्येन काठश्रौ ८८××; काग; –ल्येषु मीसू ५, ३,४०; ९,१,१९; १०,६, ५७; –ल्यैः वाध १७, ७१; –ल्यौ गोगृ ३,५,२३; जैगृ १,१९·२१.

तुल्य-कल्प[g]– -ल्पाः मीसू ६,६,१.

तुल्य-कारण-त्व– -त्वात् पावा १,२,७१; २, ९, २९; ३, १,७; मीसू १०,७,३५.

तुल्य-काल[g]– -ला· मागृ १, ३,९; –लानाम् मीसू ५,१,८.

तुल्यकाल-त्व– -त्वात् पावा ४,३, १०५; मीसू ३, ५, ५१; १०,८,८.

तुल्य-क्रि(या>)य– -यः पा, पावा ३,१,८७.

तुल्य-गात्रक[g]– -का. अप ६९,३,४.

तुल्य-गुण[g]– -णेषु आपध २, १७,१०; हिध २,५,३९.

तुल्य-घोद्गम– -मात् लाश्रौ ८,१,१०.

तुल्य-तस(:) वाध १७,२३.

तुल्य-त्व– -त्वात् मीसू १,४, ७, ३,६,७; १०,७,३१;८,२४.

तुल्य-देश-प्रयत्न– -त्नम् पावा १,१,९.

तुल्य-दोष[g]– -षः वाध २०, ३०.

तुल्य-धर्म-त्व– -त्वात् मीसू १०,५,७१.

तुल्य-नामन्[g]– -मानौ बृदे १,९२.

तुल्य-निमित्त-त्व– -त्वात् पावा ३,१,३१.

तुल्य-प्रकृति-ता– -ता अप ६८,१,६.

तुल्य-प्रमाण[g]– -णानाम् काशु २, २१.

तुल्य-प्रमाणक-त्व– -त्वे कप्र ३,९,१७.

तुल्य-बल-त्व– -त्वात् पावा १,४,२.

तुल्य-बल-विरोध– -धे गौध १, ६.

तुल्य-भाज्– -भाक् गौध २८,३६.

१तुल्य-योग– -गे पा २, २,२८.

तुल्ययोगिन्– > °गि-त्व– -त्वात् मीसू २,१,४६.

२ तुल्य-योग,गा[g]– -गा माशि २,३,८; –गात् याशि १, १०; ५९.

तुल्य-रूप[g]– -पान् बृदे ५, ६७, –पे पाप्रवा ४,१३.

तुल्य-वत् आपश्रौ २४, २, ३७; मीसू.

तुल्य-वयस्[g, h]– -यसः बृदे ५,६८; –याः पागृ ३,८,१७.

तुल्य-वर्चस्[g]– -र्चसः अप ५२,८,१.

तुल्य-शब्द-त्व– -त्वात् मीसू ३,५,५४; ८,२,२६.

a) वैग १ द्र.　b) तु. पागम. ।　c) कर्मणि ष्यञ् प्र. ।　d) नाप. । उस. उप. कर्तरि कृत्. ।　e) =(पञ्चदशाह्निक-) व्रत-विशेष- ।　f) तृस.>सस.>पस. ।　g) विप. । बस. ।
h) उप. =आयुस्- ।

तुल्य-श्रुति-त्व- -त्वात् मीसू २,१,१०; ५,२,१८.
तुल्य-सं(ख्या>)ख्य[a]- -ख्यानाम् मीसू ११,४,४०.
तुल्य-संख्यान- -नात् मीसू ४,४,१५.
तुल्य-संनिपात- -ते लाश्री ६,९,८.
तुल्य-समवाय- -ये काश्री १,५,१०.
तुल्य-हेतु-त्व- -त्वात् मीसू ९,१,५०; १०,८,३.
तुल्या(ल्य-अ)पकृष्ट-वय- -ये बौध १,१०,३०.
तुल्या(ल्य-अ)र्थ[a]- -र्थानाम् वाश्री १, १,१, ६६; कौसू ६३, १७; -र्थैः पा २,३,७२.
तुल्यार्थ-तृतीया-सप्तम्यु(मी-उ)पमाना (न-अ) व्यय-द्वितीया-कृत्य- -त्याः पा ६, २, २.
तुल्या(ल्य-आ)स्य-प्रयत्न- -त्नम् पा १,१,९.
तौल्य- -ल्यः अप ११,२,१.
२तुल- (>२तुल्य- पा.) पाग ४, २, ८०.
तुलम- (>°भीय- पा.) पाग ५, २, ११६.
तुलस्य[b]- -स्याः बौश्रौप्र ३६ : १.
तुलसी[c]- > °सी-दल-भक्षण- -णम् शंध १२९.
तुलसी-भू-महादेवी-चूर्ण-स्पृष्ट- -ष्टः अप ३५,२,१०.
१तुल्य- √तुल् द्र.
२तुल्य- २तुल- द्र.
तुल्वल[b]- पाउभो २,३,१२३.
तौल्वलि- पाग २, ४, ६१; -लिः आश्री २,६,१७; ५,६,२४.
तौल्वलायन- पा २,४,६१.
†तुवि[d]- -वि अप ४८, ६६; निघ ३,१.
तुवि-कूर्मि[d]- -र्मिः शांश्रौ१८,७,५†
†तुवि-क्ष[d]- -क्षम् या ६,३३♃.
†तुवि-क्ष(त्र>)त्रा[d]- -त्राम् आश्रौ २,१,२९; शांश्रौ २,२,१४.
†तुवि-जात[d]- -तः वैश्रौ १८, १ : १५; या १२,३६♃.
तुवि-मृष्ण[d]- -ष्णः आपश्रौ १२, १४,१५†.
†तुवि-शुष्म[d]- -ष्म शांश्रौ १०, १२,९; -ष्मः शांश्रौ १५,२,१.
†तुवि-श्रवस्[d]- > °स-तम- -मम् आश्रौ २,१०,६; काठ ३२,२.
तुवि-ष्वण(<स्वन)स्[d]- -णसम् माश्रौ ५,१,२,१७†.
तु( वि> )वी-मघ[d]- -०घ माशि २९†.
तु( वि> )वी-रव[d]- -वम् ऋप्रा ९, २†.
तुविस-[d]>तुविष्ट( स्-त )म[d]- -मः शौच ३,९६†[e].
तुविष्टम-वर्जम् शौच ४,५९.
√तुश्[d]>तोश[d]- -शा आश्री ५, १०, २८; शांश्री १२, २, १८; साश्र २,१०५२[२].
तु-शब्द तु. द्र.
√तुष् पाधा. दिवा. पर. प्रीतौ, तुष्यति आमिगृ २, ५, १ : ४७; जैगृ २, ६ : ३५; कप्र २, १०, ६; अप ७०[३], २९, २; आज्यो ११, ५; तुष्यन्ति नाशि १, ५, १६; तुष्येत् शांश्री १, १७, ५; तुष्येरन् अप १३,४,८; तुष्येयुः अप ३०,४,१; ७०,३,३; अशां २५,३.
अतोषयत् बृदे ४,५८.
तुषित[f]- -०त विघ ९८, ४७.
तुष्ट- -ष्टः आमिगृ २, ५, ४ : १०; बौगृ; -ष्टाः अप ५,५,२; १३, ५,१; विघ १९,२३; -ष्टे ऋअ ३,१; -ष्टेषु विघ १९,२३.
तुष्ट-सम- -माः विघ १९,२३.
तुष्टि- -ष्टिः कप्र १,१,१२; आपध १, २३, ६; हिध १, ६, १४; -ष्टिम् अप ६८, २, २५; बौध २,५,२४†.
तुष्टि-कारि- -री आमिगृ २, ३,१ : २७.
तोषयित्वा आपध २,१३,१२; हिध.
तोषित- -तः कप्र २,१०,७.
तुष[d]- पाग ४, २, ८०[g]; -षम् कौसू ६६, २५; -षाः आपश्रौ ८, ७, १५; भाश्रौ; -षाणाम् आपश्रौ ८, ८,११; बौश्रौ २०, ७ : १०; -षान् काश्रौ २,४,१९; आपश्रौ; -षैः आपश्रौ ८, ७,१४; पैश्रौ.
तौषायण- पा ४, २,८०.
तुष-केश-पुरीष-भस्म(म-अ)स्थि-श्लेष्म-नख-लोम- -माणि शंध ८७.
तुष-धान्य-वर्जम् बौध ३,३,७.
तुष-निष्कास- -सम् आपश्रौ ८,८, १३; भाश्रौ ८, १०, १३; माश्रौ १,७, ४,२४![h]; वैश्रौ ८, १४ : ६; -सस्य माश्रौ१,७,४,४०![h].

a) विप.। बस.। b) = ऋषि-विशेष-। व्यु.?। c) = ओषधि-विशेष-। व्यु.?। d) वैप १ द्र.। e) पाभे. वैप १,१४५१ q द्र.। f) = विष्णुनामाऽन्यतम-। व्यु.?। g) अर्थः?। h) °ष्काष- (तैवि.) इति पाठः? यनि. शोधः।

†तुप-प(क>)क्का[a]– -क्काः काश्री १७, १, २३; आपश्री १६.१५, ८; बौश्री १०, १९ : ३; २२ : ९; माश्री ६, १, ४, ३९; वाश्री २,१,४,२३; वैश्री १८,१३ : ७; हिश्री ११,६,५.

तुप-प्रतिपादन– -नम् हिश्री ५, ३, ४८.

तुप-विहीन– -नान् बौध ३,२,१०.

तुपा(प-अ)ग्नि– -ग्निना आग्निगृ ३, १०,४ : २०; -ग्निम् आग्निगृ ३,१०,४ : ५.

तुपा(प-आ)च(दि-अ)ग्नि–प्रविष्ट– -ष्टानाम् काध २७४ : १.

तुपा(प-आ)वृत्ति– -त्तेन वैश्री ४, ७ : ६.

तुपो(प-उ)पवपन– -नम् आपश्री ६,२९,१७.

तुषार[b]– पाउ ३, ११९; -रेण अप ६८,१,३१.

तुष्टुयस्– √स्तु द्र.

√तुस् पाधा. भ्वा. पर. शब्दे.

तुस्तूर्पमाण– √स्तृ, तृ द्र.

√तुह् पाधा. भ्वा. पर. अर्दने.

तुहिन– पाउ २,५२.

तुहिहर्यतच्छन्द्–विशिष्ट– ह,तु द्र.

तूख[c]– -खानाम् पाग्र ९ : १; १० : २; ३९ : १०; ४१ : १४; १८; १९;२२.

√तूड् √तुड् टि. द्र.

√तूण् पाधा. चुरा. आत्म. पूरणे.

तूण[d]– पाउभो २,२,१२३; पाग ४,१, ४१; -णम् शुअ ३, ११९; -णात् अप ६७, ६,५.

तूणी– पा ४,१,४१.

तूणी-बन्ध– -न्धः बौश्री १८, ३५ : ८.

तूणकर्ण– (>तौणकर्ण)– तूणकर्ण– टि. द्र.

†तूणव[a]– -वम् काग्र १७, २; -वान् आपश्री २१, १७, १७; १९,४; -वे तैप्रा १३, १२; -वेषु या १३,९.

तूणव-ध्म[e]– -ध्मम् शुप्रा ५.५†.

तूणीर[f]– पाउइ ४, ३०; -रात् अप ७१,१४,४.

तूतुजान–, तूतुजि– √तुज् द्र.

†तूतुम[a]– -मा या ५,२५ф.

तूतोद् √तुद् द्र.

तूपर[e]– -रः काश्री १०,९,५; शांश्री; -रम् आपश्री १६, ७, १××; बौश्री; -रस्य †आपश्री २०, १९,३[2];९; काश्रीसं; -राः शांश्री १५, १, २२; आपश्री; -रान् आपश्री १८, २, १३; वाश्री ३, १, १, २०; -राय बौश्री २६, १०:१९; -रेण विध ८०,११.

तूपर-गोमृग– -गयोः आपश्री २०, १८,८; हिश्री १४, ४,१७.

तूपर-मिथुन–दक्षिण[e]– -णा काश्री १८,६,२३.

तूयर– पाउभो २, ३,७४.

†तूय[i]– -यम् अप ४८, ७५; १०६; निघ १, १२; २, १५; या ३, २०;५,२ф, ८,१३ф.

√तूर् पाधा.दिवा.आत्म.गतित्वरणहिंसनयोः.

तूर्ण– प्रमृ. √त्वर् द्र.

†तूर्णा(र्[1]-ना)श[a]– -शम् निघ ४, २; या ५,१६ф.

तूर्णि– √त्वर् द्र.

तूर्य[g]– -र्याणि अप ५, ४, ३; ७१, १५,४.

तूर्य-घोष– -षेण अप ४, २, १३; ६९[2],५,१.

तूर्य-निर्घोष– -षः अप ७०[1], २,३.

तूर्य-माण(,न)– पावा ८, ४,१०.

तूर्यन्ती[h]– -न्तीम् आग्निगृ २, १, ३ : २; आपगृ १४,१४,भागृ१,२२: १०; वैगृ ३,१४:९; हिगृ२,२,८.

√तु(<तु)र्व्[a] पाधा. भ्वा. पर. हिंसायाम्.तूर्वति अप ४८,१९†.

तूर्व–>तूर्व-या(न>)ण[a]– -णम् शांश्री १४, ४९, ३†.

√तूल् पाधा. भ्वा. पर. निष्कर्षे.

तूल[j]– -लः आपमं २, १९, ८; हिगृ २,७,२; -लम् अप ११, २,४; आपध १,१२,२४[l]; बौध २,७, १५[k]; हिध १,८,६५![l]; -लानि माश्री १,१, १,२; -लेषु, -लैः माश्री १,१,१,१.

√तूलि पा ३,१,२५.

तूलि– पाउइ ४,१२०.

√तूष् पाधा. भ्वा. पर. तुष्टौ.

तूष[a]– -षम् लाश्री ८, ६,२१†.

तूष्णीम्[e] आश्री १,१,२१××; शांश्री; पाग १,१,३७; तूष्णीम्ऽतूष्णीम् आग्निगृ ३,५,५ : १६.

तूष्णीं-शंस[m]– -सः आश्री ५, ९, ११; शांश्री ९, २५,१; १८, १, २; -सम् आश्री ५, ९,१; शांश्री ७,९,१; १७,१०,१५; १८,२१;

a) वैप १ द्र.। b) =हिम-। व्यु. ? <√तुष् इति प्रायोवादः। c) =ऋषि-विशेष-। व्यु. ?। d) =इषु-धि-। व्यु. ?। e) उप. =२दक्षिणा-। f) वैप १,१४९२ n द्र.। g) =वाद्य-विशेष-। व्यु. ?। h) =ओषधि-विशेष- [अपका-]। व्यु. ?। i) नाप्रा.। वैप १,१४९३ g द्र.। j) =आगामिनी- संपद्-। k) =इषीकाग्र-। l) तूल्यम् इति पाठः ? यनि. शोधः। m) शस्त्रसमूहसंज्ञा-।

१; -से शाश्री १७, १४,३.
तूष्णीं-स्तोम[a]- -मः बौश्री १६,८:
७; -मात् बौश्री २६, १४:
१०; १४; -माय बौश्री १६,
७:१.
तूष्णी-क,का- पावा ५, ३, ७२;
-कः बौश्री २०, १६: २५××;
-कम्[b] आपश्री २१, ११,११;
बौश्री; -का बौश्री २१, १६:
१०××; -काः बौश्री २१, १:
७××; -कान् वाश्री १, ७, ४,
११; -कानि बौश्री २१, १:
८; २२, १०: १५; २५, १:
१६; -कानिः हिश्री ७, ४,५८;
-काम्[c] आपश्री १४,२१, ७;
वाश्री १,१,१,२७;६,३,१; पावा
५, ३, ७२; -केन बौश्री २१,
१६: १३; वैश्री ३, ८:३;
हिश्री १, ३, ४६; ३, ८, १७;
२२, ३, ७; -केषु आपश्री ३,
१४,७; १४, २१, ५; माश्री ३,
१५,१; वैश्री २१,१०:७; हिश्री
१,१,२१; २, ८,८;१५,६,४.
तूष्णीं-स्थाय[d]- -यम् कौगृ ५,
६,३.
तूष्णीं√भू > °भावम् पा ३, ४,
६३.
तूष्णीं-भूत- -ताः विध ८,३७.
तूष्णीं-भूत्वा, °भूय पा ३,४,६३.
तूस्त[e]- पाउभो २,२,१३४; पाग ६, २,
१३४..
√तूरित पा ३,१,२१.
√तृंह्,तृह्[f] पाधा. तुदा.; रुधा. पर.
हिंसायाम्, तृंहन्ति तैश्रा १६,
२६†.
†तृणेढि श्रप ४८,११; निघ २,
१९; तृणहान् श्रा २,४,१५†.
तृंहत्[g]- -हत् श्रश्रा ८,२७†.
√तृक्ष् पाधा. भ्वा. पर. गतौ.
तृक्ष[h]- पाग ४, १, १०५; -क्षस्
आपश्री २४,८,८[i].
२ताक्ष्य- पा ४, १, १०५;
-क्ष्यं आश्री १२, १२, १;
आपश्री २४,८,८; -क्ष्यस् आश्री
१२,१२,१.
ताक्ष्यायण- पाग ४,२,५४;
-णाः बौश्रीप्र ७: २.
ताक्ष्यायण-भक्त- पा ४,
२,५४.
तृक्ष-वत् आपश्री २४,८,८[i].
तृक्षाक[k]- (>ताक्षाक- पा) पाग ४,
१,११२.
तृच- त्रि- द्र.
तृचि जैश्रीका ५३[l].
√तृण् पाधा. तना. उभ. अदने.
१तृण[e]- पाउ ५,८; पाग २,४,३१;४,
२, ४६; ८०; ९०; ९१; ३,७६;
१४४; ६, २, ८५; पावा
२, ४, १२; पावाग ४, २,५१;
-णम् आश्री १,३,३१××;शाश्री;
-णस्य हिश्री ४,४,१५;-णानाम्
बौश्री २०, ५: १८; कौसू;
-णानि आश्री १,३,२२; शाश्री;
-णाभ्याम् काश्री ९, १४, ४;
-णे काश्री २,६,६××; काठश्री;
-णेन काश्री ४,१४,५; आपश्री;
पावा १, ४, २१; -णेषु आश्री
८, १४, १३; १४; बौश्री; -णैः
काश्री २, ३,६; आपश्री.
१तार्ण- पा ४, ३, ७६.
तृण-काण्ड- पावा ४,२,५१.
तृण-काष्ठ- पाग २, ४,११[l]; -ष्ठम्
श्रप ५०,९,३; बौध २,१,५५[k];
-ष्ठेषु आपध १, १५, १४; हिध
१,४,७३; -ष्ठैः आपध १, २१,
२; हिध १,६,३१.
तृणकाष्ठ(ष्ठ-श्र)वासन- -नम्
काश्री ७,७,८.
तृण-काष्ठ-द्रुम-शुष्काम्न-गुड-वस्त्र-
चर्मा(र्म-श्रा)मिष--षाणाम् विध
५२,९.
तृण-काष्ठ-शुष्कपलाश- -शानाम्
विध २३,१६.
तृणकीय- पा ४,२,९१,
तार्णक- पा ६,४,१५३.
तृण-कूर्च- -र्चेन जैगृ १,३:२४.
तृण-च्छेदन-> °न लोष्टविमर्दन-
(नि[l])ष्ठीवन- -नानि आपध १,
३२,२८; हिध १,८,६९.
तृण-च्छेदिन्- -दी विध ५, ५८;
७१,४३.
तृण-जम्भ- पा ५,४,१२५.
तृण-जय[m]- -याय बौगृ ३,९, ५.
तृण-निरसन- -नम् शांश्री ४,६,५.
तृणनिरसना(न-श्रा)दि- -दि
वैश्री १५,२४: ४;५.
तृण-प(द्>)द्री- पाग ५, ४,
१३९.
तृण-पाणि[n]- -णिः ऋप्रा २,५,४९;.

a) = स्तोम-विशेष-। b) प्रायेण द्वि१ सत् क्रिवि.। c) वा. क्रिवि.। d) विप.। बस.। e) अर्थः व्यु. च ? । = जटीभूत-केश- इति पासि., = घूलि- इति MW.। f) पा ७,३,९२ परामृष्टः द्र.। g) वैप १ द्र.। h) व्यप.। व्यु. ?। i) °क्षु° इति पाठः ? यनि. शोधः (तु. सप्र. आश्री १२, १२,१; C. च)। j) तु. पागम.। k) तृणं, का° इति चौखं.। l) द्विप. पाठः। m) = ऋषि-विशेष-। n) व्यप. (तु. साम्र. बृदे.; वैतु. षड्गुरुशिष्यः विप. इति)। बस.।

साश्र १,४१.

तृणराशि-क- -कम् ऋअ २, ६,४८; -कस्य वृदे ५, ११३.

तृण-प्रासन-प्रभृति- -ति द्राश्री ४, १,१५; लाश्री २,२,३.

तृण-वि(,वि[a])न्दु[b]- पाग ४,१,९६; पावाग ४,२,२८; -न्दवः बौश्रौप्र २७ : २; -न्दवे आग्निगृ १, २, २ : १८; बौगृ ३, ९, ५; भागृ ३,१० : ४; हिगृ २,१९,६.

तार्णबि(,वि[a])न्दवि- पा ४, १,९६.

तार्णबिन्दवीय- पावा ४, २, २८.

तृणबिन्दु-सनु- पाग २, १, ३८[a].

तृण-मूल्य(ल्य-अ)म्बु(म्बु-उ)दक-वाक्सूनृता(ता-अ)नसूया- -याः वाध १३,६१.

तृण-मथ- पा ४, ३,१४४.

तृण-मुष्टि- -ष्टिम् बौश्रौ २, ८ : ४; २४; वैगृ २,१६ : ७.

तृण-वंश- -शम् बौश्रौ २५,४ : ४.

तृण-वर्ह[c]- -र्हान् बौश्रौ ६, २७ : २०.

तृण-वल्ली-समाकु(ल>)ला- -लाम् अप ७०[1],२३,१०.

तृण-श- पा ४, २,८०.

तृण-शायिन्- -यी विध ५०,४.

तृण-संवाद- -दः आपध १, ११,८; हिध १,३,६५.

तृण-हिरण्य- -ण्येः काश्री १२, ६,१.

तृणा(ण-अ)ग्र- -ग्रम् काश्री ६, ६, १४; वाश्री १,३, १,३३; ६,५, २१; -ग्राणि वाश्री ३,२,६,४६.

तृणा(ण-अ)द- -दान् अप ७१, ५,३.

तृणा(ण-आ)दि- -दि काश्री ३, ७, १३; -दीनाम् अप ६४,५,१०.

तृणा(ण-अ)ध- -धान् आपश्री २०, २,११[d]; हिश्री १४,१,२३[d].

तृणा(ण-अ)न्तर्धान- -नेन वाश्री ३, २,१,१८.

तृणा(ण-अ)पचयन- -नम् शांश्री २, १५,३.

?तृणापल- तृणोलप- टि. द्र.

तृणा(ण-अ)र्थ- -र्थे काश्री २,८,७.

तृणिल- पा ४,२,८०.

तृणीय- पा ४, २, ९०.

तृणे(ण-इ)ढ- -ढः हिश्री १५, ३, ११[d].

तृणै(ण-ए)ध[e]- -धः भाश्री ९,१३, ९[d], -धे आपश्री ९,९,१२[d].

तृणो(ण-उ)दक- -काय बौश्रौ ६, ९ : ७.

तृणो(ण-उ)दक-भूमि- -मि बौध ५, ३६.

तृणो(ण-उ)लप[f]- पाग २,४, ११.

तृणौ(ण-ओ)षधि- -धीनाम् बौध ३,२,१५

तृण्य- पा ४,२,४९.

२तृण[g]- पाग ४, १,९९;११२[h].

२तार्ण- पा ४,१,११२.

तार्णायन- पा ४,१,९९.

तृणकर्ण[g]- पा, पाग २, ४, ६३; ४, १,११२[h,i].

तार्णकर्ण- पा ४,१,११२.

तृण-काष्ठ- प्रमृ. १तृण- द्र.

तृणव[j]- (>°वीय- पा.) पाग ४, २, ९०.

?तृणवः अप १,७,५.

?तृत- -ते कौसू ४६,२६†[k].

तृतीय- प्रमृ. त्रि- द्र.

?तृत्यम् माश्री ३,२,५,२६.

तृत्सु[l]- -त्सवः या ७,२†.

√तृद् पाधा. रुधा.उभ. हिंसानादरयोः, अतृणत् ऋप्रा १,९८†; तृन्धात् या १,१२.

ततर्द या १०,४१†φ.

†तर्द्[l]- -र्दै अश ६, ५०; -र्दम् कौसू ५१, १७; १९; अप ३२, १,१२; अश ६,५.

?तर्दापते[1] अश ६,५०†.

तर्दन[m]- -नम् या १, १३.

तर्मन्[l]- -र्म काश्री ६,१,२८; काठ्ठ २५,९†[n]; कौसू ७६,१३; -र्मसु काश्री ७,३, १७; काठ्ठ २६,३†.

तृम्न्[l]- -म्न आगमं १,१,१०†[n].

√तृप्, दृप्° पाधा. दिवा. स्वा. पर. प्रीणने; तुदा. पर. तृप्तौ; चुरा. उभ. तृप्तौ संदीपने च, तृप्यति बौश्रौ १०, १० : १; २७, १२ : ९; माश्री; तृप्यन्ति बौश्रौ २७, १२ : ६,८; वाधूश्रौ; तृप्यामि गोगृ १,९,३; तृप्यामहे विध ८३,२१; तृप्यतु आश्रौ ५, ६,२†; शांश्रौ; †तृप्यताम् अप ४३, २, १५××; †तृप्यन्ताम्

a) तु. पागम. । b) = ऋषि विशेष- । व्यु. ? । c) = तृण-पूल- । d) सपा. तृणेढः <> तृणैधः <> तृणैधे इति पाभे. । e) विप. । बस. । f) तृणापल- [पक्षे] इति भाण्डा. । g) व्यप. । व्यु. ? । h) तृण-, कर्ण- इति भाण्डा. पाका., तृणकर्ण- इति पासि. । i) तृण° इति पाका. । j) तु. पाका. । k) पाठः ? त्रिते इति शोधः (तु. शौ ६,११३,१) । l) वैप १ द्र. । m) = १तृण- । n) पाभे. वैप १, १४९४ n द्र. । o) या १०, १० पाग ८, ४, ३९ पावा ३, १, ४४ परामृष्टः द्र. ।

कौगृ २,५,२[१]; वैगृ; †तृप्यन्तु आपश्रौ ३, ११, २; बौश्रौ; शांगृ ४, ९, ३[२a]; ६, ६, १०[a]; तृप्यस्व बौगृ ३, १२,८; बौपि; तृप्य बौश्रौ८,९:२१†,†तृप्यतम् आपश्रौ २, २०, ६[b]; १४, ३०, २[c]; बौश्रौ २४, २९ : २१; २९,५ : ३[c]; माश्रौ; हिश्रौ १५, ७,१८; †तृप्यत आपमं २,२०, २३[१];२५[१]; आमिगृ; †तृप्याणि आमिगृ १,५,१ : १०; १३; तृप्येद् वाध १०,२५; १४,१२; विध ५७,१३.

तृप्णुयन्तु †बौश्रौ २, १० : ३३;३५;३६; तृप्णुताम् काठ १, १७,७†; †तृप्णुत[d] आपश्रौ १९, ३,७ बौश्रौ.

तृम्पताम् शांगृ ३, ३, १†[e]; तृम्पन्ताम् आपश्रौ १३, १२, ८; बौश्रौ; †तृम्पन्तु काश्रौ ९, ११, ९; शुअ १. ४५१; †तृम्प शांश्रौ ७, १०, १५[f], ऋप्रा ७, १६; †तृम्पतम् शांश्रौ ४, १०, १[b]; १३,१२,५[g].

तातृपुः आपश्रौ २१,११,१९†; तृप्यासम बौश्रौ ८, ९ : २१†; अतृपम् आमिगृ १, ५, १ : १२†.

तर्पयते आमिगृ २, ५, ७ : ९; २,६, ८ : १६; तर्पयति काश्रौ ३, ८, २७; बौश्रौ; तर्पयन्ति आगृ ३,५,२१; शांगृ; †तर्पयामि बौश्रौ ९, १९ : १५[a]; कौगृ; बौध २, ५, २७[२८a]; तर्पयामः आमिगृ २,५, ३ : २३; बौगृ ३, ७, १५; तर्पयतु कौगृ ५,७,२†; तर्पयन्तु आपमं २, २०, २४; आमिगृ; आपध २, ७, १३†[g]; हिध २, २, ३२†[g]; †तर्पय, >या आपश्रौ ४, ८,१[१]; माश्रौ; माश्रौ १, ३, ५, २७[b]; ८, ४, ४०[h]; २, ४, १, ५९[h]; पागृ २, ६, १८[k]; तर्पयत शाश्रौ ४,५, ३†; आपश्रौ; अतर्पयत् वाधूश्रौ ३,२१ : २; अतर्पयन् वाधूश्रौ ३, २१ : ४; आमिगृ; तर्पयेत् शागृ ७, २; ८, २; भागृ; तर्पयेयुः पागृ २,१२,२; गोगृ ३, ३,१५.

†अतीतृपम् कौगृ ३, १५, ३; शांगृ ३, १२, ५; अतीतृपन्त बौश्रौ ५,१५ : १६†; अतीतृपम् माश्रौ २, ३,७, १†; अतीतृपम् बौश्रौ १४, ८ : २८†.

तितर्पयिषेत् शांगृ १, २,७; गोगृ १, ९,२.

तर्पण- -णम् वैगृ ३,२३ : १५××; यम, -णात् कश्र २, ३, ५; -†णाय आमिगृ ३,२,१ : १६; हिगृ २,१४, ४; -णेन पागृ ३, ३,११; -णैः आज्यो १४,९.

तर्पण-विधि- -धिः शंध ११६ : २; -धिम् अप ४३,१,१.

तर्पण-सम(र्थ>)र्था- -र्था: वाध ३,३५.

तर्पण-हीन- -ने वैगृ ६,८ : ८.

तर्पणा(ण-आ)दि- -दीनि शंध ११२.

तर्पयत्- -यन् काठ ४, २०; बौगृ २,११,४०; -यन्तः या ६,१५.

तर्पयन्ती- -न्तीः आपमं २, २०,२४†.

†तर्पयितवै[h] काश्रौ ३, ८, २७; आपश्रौ ४, १६, १७; बौश्रौ.

तर्पयितृ- -ता मा १०, १०; -तारः बौश्रौ ८,९ : २१.

तर्पयित्वा बौश्रौ ९,१९ :३०××; प्र.

तर्पित- -तैः वाध ११,१३.

तर्पित-द्राक्षि[i]- पाग २, २,३७.

तातृपा(प>)णा- -णा ऋप्रा ९, ५२†.

तातृपि[j]- -पिम् ऋप्रा ९, ५२†.

[१]तृप्- †तृपा[k] आश्रौ ४, ६, ३; शाश्रौ ५,९,७.

तृपत्[l]- पाउ २, ८५; पाग ३, १, १२; -पत् ऋप्रा १७,३५†[l].

√तृपाय पा ३,१,१२.

तृपु[m]- -पुः निघ ३,२४†.

[१]तृप्त,प्ता- पाग ३,१,१८[n]; ५, २, १३१[o]; ६, २, १७०[o]; -प्तः आश्रौ २,९,३;४; बौश्रौ; -प्तम् बौश्रौ २५, ३४ : ११; -प्ता माश्रौ १, ३, ५, १९†; -प्ताः वाधूश्रौ ३, ४२ : ९;

a) सप्र. तृप्यन्तु<>तर्पयामि इति पाभे. । b) पाभे. वैप २, ३खं. तैब्रा ३, ७,५,१२ टि. द्र. । c) पाभे. वैप १,१४९५ g द्र. । d) पाभे. वैप१,१४९५ f द्र. । e) सप्र. तृम्पताम् <> तिष्ठन्तीम्<> पुष्यताम् इति पाभे. । f) पाभे. वैप १,१४९५ h द्र. । g) °पंस्यु इति पाठः? यनि. शोधः (तु. सपा. शौ १५,११,२) । h) सप्र. तर्पय <> तर्पयितवै इति पाभे. । i) तु. पागम. । j) वैप १ द्र. । k) कृपा स्वः> ?तृपा स्वः इत्यूहः, तस्य च सपा. शौ ७, १४,२ प्रमृ. अभावः (तु. BC. C.) । l) वैप १,७४५ k द्र. । m) स्तेन-नामन्- । n) तु. भाण्डा. । तृप- इति पागम., तीव्र- इति [पक्षे] पाका. । o) तु. भाण्डा. प्रमृ. । तृप- इति पाका. ।

आमिगृ; -प्तान् आगृ ४,७,२६; कागृ ६३,१९; कागृउ; -प्ताम् या १४,२९†; -प्तेषु वाधूश्रौ ४,७४ : ३०; वैगृ ४,४ : १; कप्र १,३,९.
तृप्त-तम- -मैः या ९,१२.
तृप्त-वत्- -वन्ति निसू २,११ : १३.
√तृप्ताय पा ३,१,१८.
तृप्तिन्- पा ५,२,११३.
२तृप्त[a]- -सम् निसू १,५ : १९; श्रप्रा १७,५.
तृप्ति- -प्तिः काश्रौ ४,८,१[i]†; भाश्रौ; कप ४८,७५†[b]; निघ १,१२†[b]; -†प्तिम् आगृ १,२३,१५; २४,२४; आमिगृ; -प्तौ अप ४८,५०.
तृप्ति-कर- -रम् वैध १,९,१५; -रा. बाध ३,४७.
तृप्ति-कर्मन्[c]- -र्मणः या २,५,९,५.
तृप्ति-प्रश्न- -श्नः शांगृ ४,४,१४
तृप्त्य(प्ति-अ)न्त- -न्ते बौगृ २,११,४१.
तृप्यत्- -प्यन् गौध २,४८.
तृप[d]- -पाः बौश्रौ २५,१४ : ११, -पाणाम् हिश्रौ १३,५,२३.
†तृपल-प्रभर्मन्[e]- -र्मा या ५,१२ꣳ.
तृप(ल>)ला- पाउ १,१०४.
तृपु- प्रमृ. √तृप् द्र.
[f]तृप्यधि-द्वय[f]- -येन वैगृ १,१३ : ५
तृप्र,प्रा[g]- पाउ २,१३, [h]पाग ५,१,१२२[i]; -प्रम् अप ४८,६५†[j];
-प्राम्यः काश्रौ २५,११,३१†.
तार्प्र- पा ५,१,१२२.
तृप्र-ता-, तृप्र-त्व- पा ५,१,१२२.
तृप्र-प्रहारिन्- -री या ५,१२.
√तृप्राय १तृप्र- टि. द्र.
तृप्रालु- पावा ५,२,१२२.
तृप्रिन्- १तृप्र- टि. द्र.
तृप्रिमन्- पा ५,१,१२२.
तृप्रो(प्र-उ)त्त(त्त>)त्ता- पा, पाग २,२,३७[i].
√तृफ्, तृम्फ्[k] पाधा. तुदा. पर. तृप्तौ.
तृफला- पाउद्द १,१०४.
√तृष्[1] पाधा. दिवा. पर. पिपासायाम्, †तातृषुः आश्रौ २,१९,२४; शांश्रौ; अतीतृषाम श्रप्रा १,१००†.
†तातृषाण- -णः श्रप्रा ९,४४; -णम् श्रप्रा ९,४३.
तातृषाण- -णम् श्रप्रा ९,३२†.
तृष्- (>तृषित- पा.) गाग५,२,३६
तृषाण- -णान् श्रप्रा ४,६६†.
तृष्ण(ष्-नै)ज्[e]- पा ३,२,१७२; -ष्णक्,-†ष्णजे या ११,१५ꣳ.
तृष्णा[e]- पाउ ३,१२; पाग ५,१,१२३[l]; -ष्णया त्रिध ५३,३५; -†ष्णा बौश्रौ २,५ : १०, वैश्रौ १,१४ : १२; -ष्णाम् कौसू २७,११ : ७०,१†; वाध ३०,१०.
तार्ष्ण्य- पा ५,१,१२३.
तृष्णा-गृहीत- -तस्य कौसू २७,१०.
तृष्णिमन्- पा ५,१,१२३.
तृष्यत्- -ष्यतः कप्र १,३२,७†.
†तृष्ु[e]- -षु आपश्रौ ३,१५,५; अप ४८,१०६; निघ २,१५.
तृष्वी[e]- -ष्वीम् या ६,१२†.
†तृष्ट[e]- -ष्टम् ऋप्र २,१०,८५[m]; बृदे ७,१३४; अप्र १४,२.
तृष्ट-दंसमन्[e]- -श्मा कौसू १३९,८†.
†तृ(ष्टक>)ष्टिका[e]- -०के कौसू ३६,३८; अप्र ७,११३.
तृष्टिका-देवता- >°वत्य- -त्यम् अप्र ७,११३.
तृष्णा-वरुत्रि[n]- -त्री पाग ६,२,१४०.
√तृह् √तृंह् द्र.
√तॄ[o,e] पाधा. भ्वा.पर. प्लवनतरणयोः, तरते अप ७०[i],२३,१२; तरति बौश्रौ २,११ : २१[i]†; भाश्रौ; तरन्ति अप्र १८,४†, †तरामि[p] माश्रौ १,५,२,१; वाश्रौ १,४,१,१६; †तरन् वैगृ १,४ : २७; २,१० : १०; गौपि, या १३,६[i]; †तर>रा शुप्रा ३,१२९; तैप्रा ३,८; †तरत>ता बौश्रौ १४,२१ : १३; आमिगृ ३,४,४ : १७; शुप्रा ३,१२९; तैप्रा ३,१२; अतरत् आश्रौ २,११,८†; सु ३१,९; बृदे ८,३२; अतरः या ११,२५†; तरेत् काश्रौ २५,११,२३; भाश्रौ, †तरेम कागृ ४५,१०; वागृ.
तिरति अप ४८,१६†.
तरपेम[e] या ५,२†ꣳ.
ततार श्रप्रा २,७२†; †ततारिषम् हिश्रौ ७,२,८३; †अतारिष्म[q] आश्रौ ४,१५,७; आपश्रौ १६,

a) =छन्दो-विशेष-। व्यु.?। b) =उदक-। c) विप.। बस.। d) =वृक्ष-विशेष-। व्यु.?।
e) वैप १ द्र.। f) पृ.? (तु. C. टि.)। g) बप्रा.। वैप १ द्र.। h) पृ ११८७ n,o द्र.। i) तु. पागम.।
j) =दुःख-। k) पावा ७,१,५९ परामृष्टः द्र.। l) या ११,१५ पा ३,४,५७ परामृष्टः द्र.। m) त्रिष्टम् इति पाठः? यनि. शोधः। n) वैप १,१४९८ c,d द्र.। o) या ५,२६; ६,१२; १२,१४ परामृष्टः द्र.।
p) पाभे. वैप २,३खं. अति···तरामि तैश्रा १,२,१,१५ टि. द्र.। q) पाभे. वैप १,१२०८ b द्र.।

१९, ८; वैश्रौ; †भताप्यं द्राश्रौ ११,१,६; लाश्रौ ४,१, ६.
तारयते जैगृ २, ८ : २५; कौसू ८२, १०; तारयति कौसू ७१, २४;८६,२७; बौध; या ७,२०; १४,३३[२]; तारयन्ति वाध ६,२; ५; तारयेत् आग्निगृ ३,१२,१ : १५; अप ३९,१,७; चव्यू २:३६.
†तत्तुरि[a]- -रिः शांश्रौ १,११, १[b]; -रिम् मा ६,३.
२तर- पा, पाग ३,१,१३४.
तरण- पाग ३,१,२७[b]; -णम् अप ६४, ९, ६; -णात् या ३, १८; -णानि कौसू ५२, १०[c]; -णे वैताश्रौ १२, ११†; अप ६८, २,३६.
√तरण्य पा ३,१,२७.
तरणि[a]- पाउ २,१०२;-†णिः आश्रौ ८,१०, ४××; शांश्रौ; अप ४८, १०६[d]; निघ २,१५[d]; -णिम् आपश्रौ ५,११,६†; बौश्रौ.
तरणि-त्व- -त्वेन या ११, १९†ई.
तरत्- -रन् आपश्रौ १०, १९, १२; कौगृ ३,११,१७; शांगृ ४, १४, ५; -रन्तौ सु २,१.
तरती- -ती आपगृ ६, २.
तरन्ती- -न्तीम् बौगृ ४, ३, ६; -न्त्याम् कौगृ १, ९, १५; शांगृ १,१५,१८.
तरत्समन्दी[e]- -न्दीभिः गौध २०,११; -न्द्यः बौध ४,२,४.
तरत्समन्दीय- -यम् बौध २, ३, ८; विध ५६, ६; -यैः बौध ४,२,५.
तरत्स(म>)मा°- -माः वाध २८, ११; शंध १०५; बौध ४,३, ७.
†तरध्यै आपश्रौ १६, १८, ७; वैश्रौ १८,१६ : २; हिश्रौ ११,६,२९.
तरस्[a]- पाउन्न ३, ११७; पाग ५, ३,१०८[f]; -†रः आश्रौ ८,१०, १; शांश्रौ १०,१०,४; अप ४८, १०३; बृदे ६, १८; निघ २, ९; -†रसा आपश्रौ ४,४,४; माश्रौ; -†रोभिः आश्रौ ५,१६, २; ७, ४,४; शांश्रौ.
तारसिक- पा ५,३,१०८.
तरस्-वत्- -वान् हिश्रौ २१,३, १०.
तरस्वती[g]- -त्यः निघ १, १३†.
तरस्-विन्[h]- -विनाम् बौश्रौप्र २६ : १.
तरितव्य,व्या- -व्यम् आगृ १, १२, ६; -व्याः वागृ १५, १०; मागृ १,१३,१५.
तरिन्[a]- -री अअ ५,२७†.
तरिष्यत्- -ष्यन् कौगृ ३,१३, १३; शांगृ ४,१४,१.
२तरी[i]- पाउ ३,१५८.
तारिक[j]- -कः त्रिध ५,१३१.
तरु[k]- पा ७, २, ३४; -तारम् या १०,२८ई.
तरुत्र[a]- पाउमो २,३, ८९; -†त्रः बौश्रौ १०,२४ : १०.
†तरुत्री- -त्री काठगृ ४१, ११; मागृ १,२२,७[k]; वागृ ५,७.
तरुस्[a]- > √तरुष्य[1], तरुष्यति निघ ४,२†.
तारयितुम् वाध ६,२५.
तारयितृ- -तारम् या १०, २८.
तितीरिषत्[m]- -षतः हिश्रौ २, ६, ५१.
तितीर्षत्- -षतः हिश्रौ ३,७,१३.
तितीर्षमाण- -णस्य माश्रौ ६, १०,८.
तितीर्षा- -र्षा हिश्रौ १७,१,९६.
तीर्ण,र्णा- -र्णम् या ३, २०; -र्णा बौश्रौ १०,१२ : ६; -र्णानि या ३,२०; -र्णे या १०,१७.
तीर्ण-तम,मा- -मः या ४, ६; -मम् या ५,२६; ७, १२; -मा या ३,१०.
तीर्ण-निर्णय[n]- -यः आग्निगृ ३, ९,३ : १४.
तीर्त्वा बौश्रौ १४, २१ : २४†; वाभूश्रौ.
१ते तद्- द्र.
२ते युष्मद्- द्र.
†तेक[o]- -कः[p] आपमं २, १६,८; भागृ २,७ : २०.
तेक्ष्णिष्ठ- √तिज् द्र.
√तेज्[q] पाधा. भ्वा. पर. पालने.
तेजन-,°नी-,तेजस्- प्रभृ. √तिज् द्र.
१तेदनि,नी[a]- -निम् शांगृ २, १२, १०; -नीम्[r] कौगृ २,७,२३[s].

*a*) वैप १ द्र. । *b*) तरणि- इति [पक्षे] भाण्डा., पामि. । *c*) =तरण-साधन- । *d*) =क्षिप्र- ।
*e*) =ऋच्-विशेष- । < तरत् स मन्दी (ऋ ९, ५८,१) । *f*) तु. पागम. । *g*) =नदी-विशेष- ।
*h*) =ऋषि-विशेष- । *i*) =नौका- । *j*) =नाविक- । जीवत्यर्थे ठक् प्र. (पा ४,४,१२) । *k*) पाभे. वैप २,३खं. परस्वी मंत्रा १,६,१८ टि. द्र. । *l*) या ५,२ परामृष्टः द्र. । *m*) इडागमश् छान्दसः । *n*) विप. । बस. ।
*o*) =स्वमह-विशेष- । व्यु. ? । *p*) सपा. हिगृ २,७,२ टेकः इति पाभे. । *q*) या १०,६ परामृष्टः द्र. । *r*) तेजनीम् इति पाठः? यनि. शोधः (तु. शांगृ.) । *s*) सपा. °निम्<>°नीम् इति पाभे. ।

†२तैदनी[a]- -नी शाश्री १२, १८, २०.
√तेप् √तिप् द.
तेपान- √तप् द.
तेलु[b]-(>तैलवक- पा.) पाग ४, २, ५३.
√तेव् पाधा. भ्वा. आत्म. देवने.
तैकायन-, °नि- तिक- द.
तैक्ष्णायन-, तैक्ष्ण- प्रमृ. √तिज् द.
तैटीकि[c]- -किः या ४,३;५,२७.
१तैतल- (> °लायनि-) १तैतिल- टि. द.
तैतलिन्- (>२तैतल-) तैतिलिन्- टि. द.
१-२तैतिक्ष-, तैतिक्ष्य- √तिज् द.
१तैतिल[d]- (> °लायनि- पा.) पाग ४,१,१५४[e].
तैतिल-कद्रू- पा ६,२,४२.
तैतिलिन्[f]- (> २तैतिल-) पावा ६,४,१४४.
३तैतिल[g]- -लः आज्यो ४,५, -लस्य आज्यो ५, १६; -ले आज्यो ५, ६.
१तैत्तिर- १तित्तिर- द.
२तैत्तिर-, °रीय-, °र्य- २तित्तिरि- द.
तैत्विक्य- तित्विक- द.
तैदेह[h]- -हाः बौश्रौप्र १० : २; १७ : २; २७ : ४; ४३ : ६.
तैरश्च्य- १तिरश्ची- द.
तैरिन्दिर- तिरिन्दिर- द.
तैरोविराम-, °मक-, °व्यञ्जन- तिरस् द.
तैर्थ-, तैर्थक-, तैर्थयात्रिक-, °र्थिक-, °र्थ्य- तीर्थ- द.
तैर्यगयनिक- तिरस् द.
तैल- प्रमृ. तिल- द.
तैलकय- २तिलक- द.
तैलपान- तिल- द.
तैलवक- तेलु- द.
तैलीन- तिल- द.
तैल्वक- तिल्व- द.
तैल्वल-(> °लक- पा.) पाग ४, २, ५३[i].
तैमक-, °मशाख- तीम- द.
तैष्य- तिष्य- द.
तैस्त्यामाद्विवर्जम् तद्- द.
†तोक[j]- पाउभो २, २, ४S[k]; -कम् ऋग ४८,८७; निघ २,२; या ३, ५; १०, ७६S; १२,६ф; छागा ३, १२६; -काय भाश्री ४, १६,५, ५,१२, १[k]; बौश्री, या १४,२६ф, -के आश्री ३,३,१; शांश्री ५,१७,६; आमिगृ; -केषु या १०,७.
तोक-वत्- -वत् काश्री ५,१३,३†.
†तोक-साति[l]- -ता आपश्री ५, ४, १, बौश्री २, ६ : ८; हिश्री ३, ३, ७.
तोकि(न् >)नी- -नी माग २,१८, २†.
तोक्म[l]- -क्मम् वाश्री ३, २, ७, ३; -क्माणाम्[m] बौश्री १७, ३१ : १६; -क्मानाम् काश्री १९, १, १८; -क्मैः आपश्री १९, ५, ११; हिश्री २३,१,८.
तोक्मा(क्म-श्र)वा(स्त >)स्ता[n]- -स्ताभिः आपश्री २२, २८,१३; हिश्री २३,४,५१.
तोक्मन्[l]- पाउना ४, १६४; -क्म निघ २, २†; -क्माणि[m] बौश्री १७, ३१ : २; २६, ३२ : १८; १६; -क्मानि आपश्री १९, ५, ७; हिश्री २३,१, ६; काठ २५, ३२†[o]; वीगृ १,५,८.
तोक्म-क्रिय- -ये आपध १, २०, १२; हिध १,६,२६.
तोक्म-चूर्ण- -र्णानि काश्री १९, १, २५.
तोक्म-सक्तु- -क्तुभिः माश्री ५,२, ११,१६.
तोजक् ताजक् टि. द.
†ितो ते[l] आपश्री १०, ३३,४; बौश्री.
†ितोतो[l] काश्री ७,६,२३.
तोत्र-, तोद- √तुद् द.
तोमर[p]- पाउद ३,१३१; पाग २, ४, ३१.
तोमर-ग्रह- पावा ३,२,९.
तोय[q]- -यम् जैश्रौका ९; कप्र; -ये शंध १०३; -येन वैध १, ४,१; -यैः वैश्री २,६ : १.
तोय-ग्रहण- -णम् कप ५, १, २.
तोय-द- -दः वाध २९, ८; -दाः कप ५९,१,१३.

a) वैप १,१५०१ a द. । b) व्यप. । व्यु. ? । c) = आचार्य-विशेष- । व्यु. ? । d) व्यप. । व्यु. ? <तितिलिन्- इति पाका ६,२,४२ । e) तु. पाका पासि. । १तैतल- इति भाण्डा., पागम. (<तितल-, इति) च । f) = आचार्य-विशेष-, [उपचारात्] ग्रन्थ-विशेष- । व्यु. ? । g) = [ज्योतिःशास्त्रसंज्ञित-] करण-विशेष- । व्यु ? । h) = ऋषि-विशेष- । व्यु. ? । i) तु. पागम. । वैल्वल- इति क्वाचित्कः पाठः (तु. पागम.) । j) वैप १ द. । k) तौ° इति पाठः ? यनि. शोधः । l) = अङ्कुरित-यव- । व्यु ? । m) णत्वं द. । n) विप. । बस. । o) तुपा. तोक्मानि <> लाजान् इति पामे. । p) = शस्त्र-विशेष- । व्यु. ? । q) = जल- । व्यु. ? ।

९२; १०, २२; बृदे ३. १२४; या १२, ७†; स्यान् शाश्री ९, २४, ३; बौश्री; †स्ये आश्री ४, ७,४; ७, ४,३[a]; शांश्री ७, २३, ५[a]××; १२, ४,२२[a]; हिश्री; वैताश्री २२, ११[a]; २७, १२[a]; ३३,२४[a].

त्यद्– पाउ १, १३२; पाग १, १, २७; ५,४,१०७; †स्यत् आश्री ४,१४, २; ५, १३, ६[b]; ६. ४, १०; शांश्री १, १५,५[c]; ७,१६, ८[b], ८, ८, ९[c]××; काश्री २६, ७, ५५[b]; आपश्री; माश्री ४, ५, ९[b].

त्यादायनि– पावा ४, १, १५६.

त्यदादि-विधि– -धय॰ पावा ५,३,१; –धौ पा १,१,२७.

१त्य,त्या– त्यः आश्री ४, ७, ४†××; शांश्री, †या २, २८; १३,३; पा ६, १, १३३, †त्या आश्री ३,७,६; ४, १४, २; ८, १०, १; शांश्री, त्योः शांश्री १२,१३,५†.

?त्यचे[d] वैश्री २१,२ : ७.

त्‍ या द्‍ यो प्र[e] मप ३४,१,८.

त्याग– प्रमृ. √त्यज् द्र.

?त्यैप्ततः सु ५७.

√त्रख् =√उरख् यद्र.

√त्रङ्क् =√कङ्क् मद्र.

√त्रन्द् पाधा. भ्वा. पर. चेष्टायाम्.

√त्रप्[f] पाधा. भ्वा. पर. लज्जायाम्

त्रप[f]–>त्रपिष्ठ[h]–, त्रपीयस्[h]– पा ६, ४,१५७.

१त्रपु[i]– पाउ १, १०; –पु वाधूश्री ४, ५९[j] : ५; वाध २,२६; अप्र ११, ३†; –पुणः शंघ १६४.

त्रापुष– पा ६,४,१३८.

त्रपु-चामर-सीसक-विक्रयिन्– -यो विध ४५,२२.

त्रपु-जतु– -तुभ्याम् गौध १२, ४.

त्रपु-मिश्र-पूर्ण– -र्णैः तैप्रा ५,४.

त्रपु-सीस– -सम् आपध २, १६, १८; हिध २,५,१८.

२त्रपु[j]– -पुः अप ४८,७७†.

त्रपुषी[k]– -षी अप ४८,१०४†.

त्रपुस[l]– -सुः माश्री ५,२,१४,९.

त्रपुस[l]–>त्रापु(स>)सी– -सीः अशां २१,२.

त्रपुस[m]-मुसल-खदिर-वार्धाघ-धानाम् कौसू २५,२३.

त्रय– प्रमृ. त्रि– द्र.

√त्रस्[n] पाधा. दिवा. पर. उद्वेगे; चुरा. उभ.भाषायां धारणे, ग्रहणे, वारणे. च

त्रस्नु–पा ३,२,१४०.

त्रसदस्य[o]– -॰स्य वैध ४, ३,४.

त्रसदस्य-वत् वैध ४,३,४.

त्रसदस्यु[l]– -स्युः ऋअ २,४, ४२; बृदे ५,१३; ३१; शुअ १,४४६; –स्योः ऋअ २, ८,१९; बृदे ६, ५१.

त्रासदस्यव -॰व आश्री १२, १२, २; आपश्री २४, ८, ९; बौश्रौप्र २० : ४; –वम् निघ ७,५ : ३५; बृदे ७, ३५; –वस्य ऋअ २, १०,३३.

त्रसदस्यु-वत् आपश्री २४, ८, ९; बौश्रौप्र २० : ५.

त्रसरेणु– पाउद्र ३,३८.

त्रसरेणु-प्रभृतक[p]– -कम् विध ४,१.

१,२त्राण– √त्रै द्र.

१त्रात[q]– -तस्य चाअ ४२:६.

२त्रात–, त्रातुम्, त्रातृ– √त्रै द्र.

त्रापुष– १त्रपु– द्र.

त्रापुसी– त्रपुस– द्र.

त्रायक–, ॰यमाण– √त्रै द्र.

त्रायोदश– त्रि– द्र.

?त्रासुर्त्र्धर्धम् कौशि ७३.

त्रि[l]–>तिसृ– पा ७,२,९९; पाग ४, १,१०; –सृणाम् आश्री २,१६, २; शांश्री; –सृभि: आश्री २,३, २९××; शांश्री; कौसू१०८,२†[q]; –सृभिःऽ-सृभिः शांश्री १६,१३, ६; आपश्री; –सृभ्यः आपश्री १३,२,१;१५,८; बौश्री; –सृषु शाश्री १४,४२, ८; ९; काश्री; –सृषुऽ-सृषु बौश्री १८,३६ : १२; –स्रः आश्री २,१,३०××; शांश्री; आपमं २, १७, २६[r]†; –स्रःऽ-स्रः आश्री २,४,१७××; शांश्री.

तिसृ-चतसृ-त्व– -त्वम् पावा ६,१,३९.

तिसृ-धन्व[l]– -न्वम् आपश्री

a) पाभे. वैप १,१५०३ j द्र.। b) पाभे. वैप १,१४३९ c द्र.। c) पाभे. वैप. १,१४३८ d द्र.। d) पाठः? सप्र. शौ ७, १०५,१ कृण्वे इति, बौश्री २८, ९ : २० करवै इति, काश्री २५, ११,२१ करवे इति च पाभे.। e) प्रचोदयात् इत्यस्य वैपरीत्येन निर्देशः। f) पा ६,४,१२२ परामृष्टः द्र.। g) अर्थः व्यु. च?। h) पाप्र. <तृप्र- इति। i) वैप १ द्र.। j) =तृप–। व्यु. ?। k) =वज्र-। व्यु. ?। l) =वृक्ष-विशेष-। व्यु. ?। m) द्वस. उप. ?। n) पा ३,१,७०; ६, ४,१२४ परामृष्टः द्र.। o) = ऋषि-विशेष-। व्यु.?। p) विप.। बस.। q) पाभे. वैप १,१५९५ n द्र.। r) सप्र. तिस्रः <> सर्वाः इति पाभे.।

१७,१२,३; १८,२१,१७; २२, २६,५; बौश्रौ.

तिसृधन्विन्– -न्विनाम् वाधूश्रौ ३,७६ : ७; -न्वी बौश्रौ २६,२० : १४; २२ : २.

तिसृ-गाव– -वे पावा ७, २, ९९.

तिस्रख्-कारम् आश्रौ ५,१५, ५; माश्रौ ६,२,२,१[a].

त्रि– पाउ ५, ६६; पा ४, २, ९१[b]; त्रयः आश्रौ १, ८, ५××; शांश्रौ; या ३,१०ф; त्रयः:ऽत्रयः आश्रौ ७, ५, २१; शांश्रौ; त्रयाणाम्[b] आश्रौ २, १०, २१××; शांश्रौ; त्रिभिः आश्रौ ८,१,११; १२, ८, ३१; काश्रौ; या १४, २९; ३१; त्रिभिःऽत्रिभिः आपश्रौ १५, ४, १०; भाश्रौ; त्रिभ्यः आपश्रौ १४, १, ६; काश्रौ; या ७, १४; त्रिषु आश्रौ १०,९, २[c]; काश्रौ; त्रिषुऽत्रिषु आपश्रौ ८,२२, १५; भाश्रौ, †त्री आश्रौ ९, ५, १६; शांश्रौ; †त्रीणाम्[b] शांश्रौ १२, २, १४; आपश्रौ; त्रीणि आश्रौ ४, २, ३××; शांश्रौ; आपश्रौ १०, ११, १२[c]; आपमं १, ३,६[c]; पागृ १, ८,१[c]; मागृ १, ११, १८[c]; †हिगृ १, २१, १[c]; त्रीणिऽत्रीणि आश्रौ १२, ९, १२; आपश्रौ; †त्रीन् आश्रौ ३, ८, १××; शांश्रौ; गोध २६, १[d]; त्रीन्ऽत्रीन् आश्रौ १०, २,३०; शांश्रौ; त्रेः पा ६,३,४८; ७,१,५३.

तृ[,त्रि]च[b]– पावा ६, १, ३७; -चः आश्रौ ८,१,२३; १२,२४; शांश्रौ; या २, १; -चम् आश्रौ १,१, १९××; शांश्रौ; अप्र ६, २[e]; -चम्ऽ-चम् आश्रौ ५,१०, ४; -चयोः आश्रौ ८, १२, ६; शांश्रौ; -चस्य जुसू १,६ : १३; द्राश्रौ; -चाः आश्रौ ४, १५, २××; शांश्रौ; -चात् आश्रौ ९, १०, १५; शांश्रौ; -चान् आश्रौ ५,१२,१५××; शांश्रौ; -चानाम् शांश्रौ ७, १९, १९; १८, २, २; -चानि शांश्रौ १०,३,५××; -चे आश्रौ ५, १०, ८××; शांश्रौ; गौपि १,३,२१[f]; -चेन शांश्रौ १, १२, ८××; काश्रौ १४, ४, ५[g]; आपश्रौ; -चेऽपः शांश्रौ १२, ३, १६; १२, ११; द्राश्रौ; -चेषु जैश्रौ २२ : १३; २६ : ७; द्राश्रौ; -चैः शांश्रौ १६, १३, १४; काश्रौ १५, १०, १६[g]; १७, ३, ८[g]; -चौ आश्रौ ३, ८, १××; शांश्रौ.

तृच-करण– -णम् लाश्रौ ६, ३,१४.

तृच-क्लृप्त– -प्तः शांश्रौ १७,८,११; -प्तम् शांश्रौ ११, ३,१××; क्षुसू.

तृचक्लृप्त-दाश[h]– -शौ शांश्रौ १४,४२,१४.

तृच-चतुष्टय– -यम् जैश्रौका १५२.

तृच-ता– -ताम् निसू ६, १३ : १३.

तृच-दृष्टि[h]– -ष्टयः निसू ४, २ : ११; -ष्टीनि निसू २, २ : १;९.

तृचदृष्टि-त्व– -त्वात् निसू २,२ : २०.

तृच-मय(म >)मा[i]– -मा निसू ६, २ : २८; ७, ८ : ३२; ९,३ : ३३; -मायाम् निसू ६, ३ : २०.

तृच-प्रायण[h]– -णम् निसू ६, १३ : ३४.

तृच-भा(ग >)गा[j]– -गा लाश्रौ ६,५,१;४;५; निसू १,८ : १७;८ : २०;२१.

तृचभागा-स्थान– -नेषु लाश्रौ ६, ५, ७; ७,४; निसू १, ११ : ३३.

तृच(च-ऋ)र्ध– -र्धे उनिसू ७ : २.

तृच(च-अ)र्चा(चा-अ)र्धर्च-पाद– -दानाम् साम १,१.

तृच-विकार– -रः उनिसू ७ : ३०.

तृच-शत– -तम् भाग्र ३, ४०; मशू १ : १२.

तृच-समाप्ति– -प्तये निसू ६,१० : २४,७, ९ : २९;९,१ : ५४;५ : ३४.

तृच-सूक्त– -क्तानाम् लाश्रौ ६, ३,१; -क्तानि क्षुसू २,९ : ३.

तृच-स्थ– -स्थम् जुसू २, १५ : ३०;३,५ : १४; ६ : १४; -स्थयोः श्राश्रौ ५, १५, १२; -स्थानि जैश्रौ २२ : १२;२६

a) तु. पागम. । b) वैप १ द्र. । c) पामे. वैप २, ३खं. श्रीणि तैब्रा ३, ७, ७, ११ टि. द्र. । d) तु. ST. । e) तृचः इति पाठः? यनि. शोधः । f) त्रिचे इति पाठः । g) त्रि° इति चौसं. । h) विप. । बस. । i) पस. । j) =स्तोत्रीया-विशेष- ।

७; –स्थे निसू ६,३ : २०.

तृच-स्थान- -ने आश्री १०, १०,४;६.

तृचा(च-आ)दि- -दिषु मीसू १०,५,७.

तृचा(च-अ)धम[a]- -मम् बृदे ८,९९.

तृचा(च-अ)न्त- -न्तेषु आश्री ५,१२,१५.

१तृचा(च-आ)पत्ति- -त्तिः निसू ७,२ : १६.

२तृचा(च-आ)पत्ति[a]- -त्तीनि द्राश्री २,१,२; लाश्री १,५,२.

तृचा(च-आ)पन्न- -न्नम् निसू २,२ : २१.

तृचा(च-अ)र्थ- -र्थः निसू ९,४ : २८.

तृचे(च-ई)प्सना- -नायै जैश्री २६ : ८

तृचै(च-ए)कर्च- -र्चान् निसू ६,३ : १७.

तृचैकर्च-त्व- -त्वम् लाश्री ६, ३ : २०.

तृचो(च-उ)त्तमा- -मायाम् लाश्री ६,३,२०

तृचो(च-उ)दयन[a]- -नम् निसू ६,११ : २४.

त्रिच-नय- -यम् जैश्रीका १२१.

त्रिचा(च-आ)दि- -दिषु वाश्री १९,७,३.

?तृच.[b] अप्राय ६,४.

तृतीय,या- पा ५,२,५५; –यः आश्री १,५,२३; २,१७,१५,५, ३,३; शांश्री; गोध २६, १९[c]; या ४, २६†; ७,९; १०, ३१†; –यम् आश्री १, ५, १३××; शांश्री, अप्र ६,९९[d]; या ३,१७; ७,२८†, –यमऽ-यम् वाश्री २०, ४,२७; काशु ५,७, –यया आश्री ४, ६, ३; शांश्री, –ययोः आश्री ६, ३, ११; –यस्य आश्री ५, ५, १५××; शांश्री; –यस्याः वैश्री ३, ७ : १४†, हिश्री ९, ४, ३४; आपमं २, १६, १; ७†[e]; कौसू ८२, ३६; १३९, २५; –यस्याम् आश्री २,१,२६; काश्री; माश २, ७,१९†[e]; हिश २, ७, ३†[e]; –†यस्यै आश्री ११, ६, ८; ५, २, ४; वाधूश्री; –या शांश्री २,२,१३××; काश्री; –याऽया क्षुसू १, ८ : १८; –याः आश्री ५,१०,११; बौश्री, आज्यो ६, १३[f]; –यात् शांश्री १०, ८, १३××, क्षुसू; पा, पावा ५, ३, ८४, –यान् आपश्री १४, ४, १४; हिश्री ९, ७, ४२, ऋप्रा ४, १; –यानि आश्री ८, ४, १७, वैश्री १, १ : १९, क्षुसू ३,१३'४; –याभ्याम् पा ७, ३, ११५, –याम् आश्री ३,६, २१, ६, ५, २१; शांश्री; –याय आपश्री १३, ६, १२; बौश्री ८,४ : ३०; लाश्री ७, ६, ४; –यायाः काश्री २०,१, १५; बौश्री, पा ५, ४, ४६; ६, २, १५३; ३, ३, –यायाम् काश्री १७,९,१; २२,८,१८; आपश्री, पा ३, ४, ४७; –†ये आश्री ५, ४,३××; शांश्री; वैताश्री ४,९[f]; –येऽ-ये लाश्री १०,६,७; ८,४; –येन आश्री ७,७,८××; शांश्री; –येभ्य· काश्री १०,२,२४; वैश्री १६,७ : २; अप ४६,९,१०†; –येषु आश्री ७,११,९; ८,३,९; आश्री; –यैः माश्री ५, २, १२, ५; शुप्रा ४, ११०; –यौ शांश्री ७,२७,१८; वैश्री १०, १९ : ५; द्राश्री ५, १, १६; लाश्री २, ५, १३; नाशि २,२,१०.

तार्तीय[g]- -यम् आश्री १०,२,४.

तार्तीयिक[h]- -कानि निसू ८, ५ : २३; –केषु निसू ८,६ : २४[i].

तृतीय-क,का- -का कप्र २, १,५; –के जैश्रीका १४३; कप्र ३,६,४.

तार्तीयक[j]- -कम् निसू ७,४ : ३.

तृतीय-कर(ण>)णी[k]- -णी काशु २,१५; १८; आपशु २,४; ५; बौशु.

तृतीय-ग्रह- -हम् माश्री २, ३,३,१२.

तृतीय-चतुर्थ- -र्थयोः निसू ५, २ : १; –र्था. आशि ४, ४; –र्थाभ्याम् लाश्री ६, ११, ८; –र्थे आश्री ४,१३,७; ८, २, ६; –र्थौ अपं ४ : १५; तैप्रा २३, १९, आशि ४,४.

तृतीय-त्रा- -त्राम् ऋप्रा ११,

a) विप. । बस. । b) पाठः? तत्र ऋक्षु इति संस्कर्तुः टि. संभावित. पाठोऽपि? तृचेन (तृ१)>नैप्र. यनि. इति प्रतीयते (तु. तत्रैव राप्र. ६,६ गौरीवितेन इति) । c) तु. St । d) उत्तरेण संधिरार्षः । e) रुप्र. °स्या <>°स्याम् इति पाभे. । f) तृतीयम् इति C. शोधः । g) तस्येदमीयः अण् प्र. । h) तस्येदमीयप् ठक् प्र. । i) पाठः? °यिकीषु इति संभाव्येत (तु. संस्कर्तु. टि.)। j) स्वार्थे अण् प्र. । k) नाप. ।

२५.

तृतीय-तुर्य- -र्ययोः माशि ७१.

तृतीय-स्व- -स्वम् माशि ४८.

तृतीय-धवित्र- -त्रम् वैश्री १३,१७ : ७.

तृतीय-पञ्चम- -मयोः शाश्री १२,३,१८; १०,५;११,५; निस् ५, ३ : २२; -माभ्याम् लाश्री ७, ४, १८; -मौ आश्री ५, १५,८.

तृतीय-प्रथम-क्षुद्र- -द्रान् नाशि १;१,११.

तृतीय-प्रसृति- -तिरयः शाश्री १२,२७,३.

तृतीय-भाव- -वम् ऋप्रा २, १०; -वे ऋप्रा ११,४८.

तृतीय-भूत- -तः ऋप्रा ४,५.

तृतीय-मात्र- -त्रम् माश्री ५,२,२,६; वौगृ ४,१,१४;३,८.

तृतीयमात्री- -त्रीम् हिश्री १३,८,११.

तृतीयमात्र-स्वात- -तानि काठश्री ११६.

तृतीय-मास- -मासि आमिगृ २,१,१ : १

तृतीय-वर्ग[a]- -र्गस्य वागृ ४,१.

तृतीय-वेला- -लाम् आपश्री १५, ३, ५; बौश्री; -लायाम् बौश्री २४,३५ : ४.

तृतीय-शस् (:) आपश्री २२, ७,१५; हिश्री १७,३,१४.

तृतीय-श्रुति- -तेः माश्री १०,३,६.

तृतीय-षष्ठ- -ष्ठे क्षुसू २,१४: ११.

[1]तृतीय-सवन- -नम् आश्री ५.१७,१××; शांश्री; या७.११; -नस्य शांश्री ८, १, २; बौश्री; -नात् शांश्री १३,९, १; काश्री; -नानि माश्री ७,१०,२; ८, ८, ३; शांश्री ११, १२, ९; -नाय काश्री ९,४, २४; बौश्री; -ने आश्री ५, २, १३××; शांश्री; -नेन आपश्री १२,११, ५; २९, १२; काश्रीसं; -नेषु काश्री २१, २,८.

तार्तीयसवन[b]- -नम् पाशि ८.

तार्तीयसवनिक[c]- -कः माश्री २, ३, २, ३; ५,३, १०; वाश्री ३,२,२,३२; -कम् माश्री २, ३,१,१९;४, ९,२३; -कस्य आपश्री २१, १०, ३; -कात् हिश्री १६, ४, १५; -कान् आपश्री २२,८, १४; -कानाम् बौश्री २१, २३ : १३; -कानि निसू २,११ : ३१; -के आपश्री १४, १९, ११; बौश्री २१,२२ : १७, -केन बौश्री २८, ४ : ७; -केभ्यः बौश्री २१, १९ : ४; -केषु बौश्री २१,१९ : ३; मीसू १२,२,१२![d]; -कैः बौश्री २६, २२ : १४.

तार्तीयसवनिकी- -क्यः आश्री ५,५, १९; -क्याः शांश्री ५,३,७.

तृतीयसवन-काल- -ले आपश्री २१,२४,९.

तृतीयसवन-चर- -राणि क्षुसू ३,११ : ६.

तृतीयसवन-शास्त्र- -स्त्रेण निसू ५,७ : २४.

तृतीयसवन-भाज्- -भाजः वाधूश्री ४,७६ : ४.

तृतीयसवन-श्रुति- -तेः काश्री १०,४,१३.

तृतीयसवन-साम(न्-अ)न्त- -न्तः निसू ९,३ : ८.

तृतीयसवना(न-अ)ति-वृद्धि- -द्धिः बौश्री २१,१९ : ६.

तृतीयसवना(न-आ)दि- -दि वैताश्री ३७,१.

तृतीयसवनिक- -कः बौश्री २५,२३ : ६.

तृतीयसवनीय,या- -याः बौश्री २५, २१ : १६; वाधूश्री ४,९९[2] : ८; -यान् शांश्री १४, २,१९;१३,५; बौश्री; -यानाम् बौश्री १८,२२ : ७; २६, २१ : ६; -येषु बौश्री १८,३७ : १६.

[2]तृतीय-सवन[e]- -नः हिश्री १६,८,२५.

तृतीय-स्थान,ना[f]- -नम् निसू ७,३ : २६; -ना निसू ९, ३ : ३१.

[1]तृतीया(य-अं)श- हर[g]- -राः बौध २,२,११.

तृतीया√कृ पा ५,४,५८.

तृतीया-चतुर्थी- -र्थ्यौ शांश्री १०,१२,१५; ऋअ २,१,१२०;. अअ ३,२६.

a) तद्धितार्थे द्विस. प्र. लुक् (पा ५, १,८९)। b) तस्येदमीयः अण् प्र.। c) तस्येदमीयप् ठक् प्र.। d) °वन° इति पाठः ? यनि. शोधः (तु. शबरभाष्यं प्रयासं. च)। e) विप.। मत्वर्थीयः अच् प्र.। f) विप.। बस.। g) उस. उप. अच् प्र. (पा ३,२,९)।

तृतीया-चतुर्थी-नवमी- -म्यः अप्र २,३९७.

तृतीया-चतुर्थी-पञ्चमी- -म्यः उनिम् ७ : ४०.

तृतीया(या-आ)दि- -दि अप्र २,३,२८; ८, १०१; -दिः पा ६, १, १६८; -दिषु आश्री ७,५,४, अग्रा २,४,३; पा ७,१, ७४, ९७; -दीन् वैताश्री ३१, १७, -दीनाम् वैताश्री ३२,६; -दौ पा २,४,३२.

तृतीयाद्य(दि-आ)युज्- -युजः अप्र २,१,१६५.

तृतीया(य-आ)धेय- -यम् बौश्री २४,१६ : ७; -ये बाश्री १,५,१,२०.

तृतीया-नवमी- -म्यौ अप्र २,७,९७.

तृतीया(य-अ)नुरूप- -पस्य शांश्री ११,११, १५; १७; १९, ११,२६,१२,११,१४

तृतीया(य,या-आ)न्त[b]- -न्तम् अग्रा ३,२,२६, -न्तस्य शौच ३,११, -न्ता पावा २,१,१०, -न्तानि अग्रा २, २, १८-२०; शौच १,८.

तृतीयान्त-सप्तम्यन्त- -न्तेषु पावा २,१,२८.

तृतीया(य,या-अ)र्थ,र्था- -र्थे बृदे ३, ७१; अप्र ३, १; -र्थौ कौ २ : १५.

तृतीया-पञ्चदशी- -श्यौ अप्र २,६,१५.

तृतीया-पञ्चमी- -म्यौ अप्र २,८,५५.

तृतीया-पर- -रे बप्र २, ६, ८.

तृतीया-पूर्वपद[b]- -दः पावा २, १,३५.

तृतीया-प्रभृति- -तयः शांश्री ८,७,३; -तीनि पा २,२,२१.

तृतीया(य-आ)याम- -मम् आपशु ७,४; हिशु २,५२.

तृतीया-युक्त- -क्तात् पा १, ३, ५४.

तृतीया(या-अ)र्थ-निर्देश- -शः पावा २,१,३०.

तृतीया(य-अ)लाभ- -भे माश्र १,७,७; वाश्र १०,६.

तृतीया-वर्जम् कौसू ३८,११; ४२,१४.

तृतीया-विधान- -ने पावा २, ३,१८;

तृतीया-षष्ठी- -ष्ठ्यौ अप्र २, १,१६२, शुप्र ३,५४.

तृतीया-षोडशी- -श्यौ अप्र २,६,१०७.

तृतीया(य-अ)ष्टम- -मयोः साश्र २,१५६,१५७; -मे आश्री ४,१३,७.

तृतीया-संदेह- -हे अप्रा २, २,३.

तृतीया-सप्तमी- -म्योः पा २,४,८४; -म्यौ अप्र २,३,८; ५,५६.

तृतीयासप्तम्य(मी-अ)न्त- -न्तेषु पावा २,१,२७.

तृतीया-समास- -से पा १, १,३०; पावा २, १, ३०; ६१; ६,१,८८.

तृतीयासमास-वचन- -नात् पावा ६,२,११.

तृतीयासमासवचना-(न-आ)नर्थक्य- -क्यम् पावा ६, २,११.

तृतीया(य-अ)ह- -हम् अप्राय २,९.

तृतीया(य-अ)हन्->तार्तीयाह्निक- -के शांश्री १५,८,३.

तृतीयिन्- -यिनः आपश्री २१, २, १८; माश्री; -यिभ्यः आश्री ९,४,५; माश्री २, ४,५, ७; हिश्री १०, ४, ३९; -यी श्रत ५,५,५[b].

तृतीयिनी[c]- -नीनाम् लाश्री ९, ६,६; -नीभ्यः लाश्री ९,११,३; -न्यः लाश्री ९,१, १२.

तृतीयो(य-उ)त्तम- -मा-भ्याम् आश्री ८,२, १०[b]; -मौ आश्री ४,७,४.

तृतीयो(य-उ)त्पन्न- -न्नानि माश्री २,३,१,११.

त्रय- पा ५, २, ४३; -यम् आश्री ४,८,२७; बौश्री; -याः काश्री १९,५, ८; ७,४; आपश्री; -याणि बौश्री १७, ११ : ४; वाधूश्री ३, १ : ८; १०१ : ३; आपमं २,११,२२; या ९, २८; -यान् आपश्री १९,६,७; शांश्री १०, १४, ८; बौश्री १७, ११ : ३, हिश्री २३, १, १६; -येण बौश्री १०,१० : ९; २५, १८ : ७, माश्री ६,१५,६.

त्रयी[d]- -यीः बौश्री २५, १७ : ४; -यीम् आपध २,२४, ८; बौध २,६,३६; हिध २, ५, १७३; या १२, १०; -य्यः

a) वि.। बस.। b) स्वार्थे इनिः प्र. उसं. (पा ५,२,११५)। c) =[ तृतीयदक्षिणावती- ] होत्रा-। d) वि., व नाप., व।

वाधूश्री ४, १५ : १३; -स्या काश्री २५,८,५†; -स्याम् गौध ११, ३; -†स्यै आपमं २, १०, १; काग्र २४, १३; बौग्र १, २, ३४; भाग्र २,२४ : १०.

†त्रयि-विद्[a]- -दाः बौश्री २,१८ : २२.

त्रयी-मय- -यम् शुअ १, १.

त्रयी-वि(द्या>)द्य[b]- >°द्या(द्य-आ)ख्या- -ख्या मीसू ३,३,५.

त्रयी-विद्या- -याम् निसू २,१ : ३८.

त्रया(य-आ)दैस- -सो पावा १,१,५६.

त्रया(य-अ)न्त[b]- -न्तानि निसू ५,९ : २०.

त्रयस्[c]- पा ६,३,४८.

त्रयस्-त्रिंशत्[c]- -शत् आश्री ३, १४, १०†[d]; शांश्री १३, १२,१३†[d]××; आपश्री; आमिगृ ३, ५, १ : १२[e]; वौपि २, ६, २[e]; या ३, १०; -शतः बौश्री २५, ३१ : ९; माश्री ६, २,५,२६; काश्री २,२, ४, ५†; लाश्री ८,६,१७; -शतम् शांश्री १६, २२, १६; काश्री; आपश्री २१, १, १४?[f]; हिश्री १६,१, ११?[f]; -शतम् ऽ-शतम् काश्री २२,४,२७; -शता काश्रौसं २९ : २१; लाश्री ८, ६, २६†; -शताऽ-शता आपश्री २२, ५, १०; बौश्री १८,२५ : ४, हिश्री १७,२, ३८; -शतो द्राश्री ११, १,३; लाश्री ४,१,३.

त्रयस्त्रिंश- -शः आश्री ४,१२,१; ११, ३, ८; आपश्री; वैश्री १८, २१ : २४†[g]; -शम् शांश्री १०, १२, २××; काश्री; -शस्य बौश्री २३, १३ : ११; लाश्री ६, २, २०; निसू ४, ५ : १५; -शाः शांश्री ४, १०, ३†; आपश्री १६,१, ३†; २१, २५, ३; बौश्री १६,३६ : १९; हिश्री ११, १, ६; हिग्र २, १७, ४; -शात् बौश्री १६,३४ : ५;१५; ३५ : ३; ६; -शान् निसू ४, १३ : ९;-शानि श्राश्री १२,४, २३; आपश्री २३,१०,९; हिश्री १८, ४, ६; लाश्री ९, १२, १६; निसू ८,१९ : २३; -शाय काश्री ९,१७, १†; -शे आश्री ७,५,११; १२,७,१२; आपश्री; -शेन आश्री १२,३,३; काश्री; -शेभ्यः हिग्र १,२२, १४; -शौ बौश्री १८,३६ : १४; २६,३३ : ३; लाश्री १०, १०,८.

त्रयस्त्रिंशी- -शीम् आश्री १२,७,१४.

त्रयस्त्रिंशद्-द्वात्रिंश[h]- -शौ निसू ६,१२ : १०.

त्रयस्त्रिंश-प्रभृति- -ति बौश्री १६,१४ : १९.

त्रयस्त्रिंश-स्तोम- -मः या ७,११; -मम् शांश्री १०, ७,१; -मान् बौश्री १७,२२ : १६.

त्रयस्त्रिंशा(श-आ)-रम्भण[i]- -णः शांश्री १३, १६, ४;५; हिश्री; -णाः आपश्री २३, १०,५; हिश्री १८,४,१[i].

त्रयस्त्रिंशा(श-अ)-यन- -ने निसू ५,४ : २२.

त्रयस्त्रिंशत्-क[j]- -कौ अपं ४ : १५.

त्रयस्त्रिंशत्-कपाल[k]- -लम् बौश्री १३, ३५ : ८; २३, ४ : ११.

त्रयस्त्रिंशच्-चिति- -तौ बौश्री २३,१५ : ८.

त्रयस्त्रिंशत्-त्र्(<त्रि)त- -तम् निघ ४, ३.

त्रयस्त्रिंशत्-प्रभृति- -तीन् लाश्री १०, ८,२.

त्रयस्त्रिंशत्-सप्तशत- -तम् मश ८, १० (१).

त्रयस्त्रिंशद्-अक्ष(र>)रा- -राः निसू ४,८ : १०.

त्रयस्त्रिंशद्-अरत्नि- -त्नेः आपश्री ७, २, १२; भाश्री ७, २,६; हिश्री ४,१,२८.

त्रयस्त्रिंशद्-रात्र- -त्रः शांश्री १३, १७, १; बौश्री १६, ३५ : १०; -त्रम् हिश्री १८,२, १०; -त्राः आपश्री २३,५,५; -त्राणि आश्री ११,४,१; काश्री २४, २, २४, -त्रात् निसू ९, १३ : १; -त्रे लाश्री १०, ३, २१; निसू ९,१३ : १८.

त्रयस्त्रिंशि(न्>)नी[l]- -नी वाधूश्री ४, ९७ : ३; ५;

---

a) वैप २,३ खं. द्र. । b) विप. । बस. । c) वैप १ द्र. । d) पाभे. वैप १. १३०४ k द्र. ।
e) = त्रयस्त्रिंशदस्थि-परिमाण- । तद्धितस्य लुक् । f) शोधः ४३९ पृ w टि. द्र. । g) पाठः ? °शम् इति शोधः (तु. आपश्री १६, ३३५ हिश्री ११,८,३) । h) पाठः ? °श-द्वा° इति शोधः । i) °णः इति पाठः ? यनि. शोधः (तु. आपश्री.) । j) विप. । परिमाणे कन् प्र. । k) तद्धितार्थे द्विस. । l) ७३५ पृ f टि. द्र. ।

९;१४;१८; २१; -त्यः वाधूश्रौ ४, ९७[१] : ३.

त्रयो-दशन्- -श आश्रौ ८, ८,८; ९,१०, २; शांश्रौ; या ३, १९; ८, २१, -शऽ-श काश्रौ २०,६,६; -शभिः काश्रौ २६, ३,९, आपश्रौ; -शभ्यः आपश्रौ १४,३,८; हिश्रौ ९,७,३८;१७, ६, ४१; -शसु आपश्रौ १२, २७,३; हिश्रौ ८,८,१; -शानाम् आश्रौ ९,९,१३; शांश्रौ १५,३, १०.

†त्रयोदश- -शः आपश्रौ १६, १८, ८; वाधूश्रौ; -शम् शांश्रौ ९, २०, १०; काश्रौ; -शस्य बौश्रौ २१, ६ : ११, -शाः यासि २, ९४; -शे बौश्रौ १२, ९ : ४××; लाश्रौ; -शेन आपश्रौ २१,१,११; आपशु ११, १८, हिशु ४,१७.

त्रयोदशी[a]- पाग ४,३,१६; -शी शांश्रौ १८,१४, ६; कात्यश्रौ, -शीम् कात्यश्रौ ५, २४,३, माश्रौ, -श्याः शांश्रौ ९, ८, ३; अप्र ५, २४; -श्याम् बौश्रौ २६,९ : १५; माश्रौ.

त्रायोदश- पा ४,३,१६.

त्रयोदश्य(शी-अन्य > )श्या- -श्ये अप्र २,१,५२.

त्रयोदश्या(शी-आ)दि-चतुर्- -तुर्षु अप ३८, ३,३.

त्रयोदश-चतुर्दश- -शौ आपश्रौ १२, २७, ५; वैश्रौ १५,३४ : ८.

त्रयोदश-त्रयोविंश- -शयोः लाश्रौ ६,७,५.

त्रयोदश-क[b]- -कम् अप्र ५,१४,२३,२५; ८,१०.

त्रयोदश-कपाल- -लम् काश्रौ २५, ४, ३५; आपश्रौ ९, १४,७; वैश्रौ २०,३० : १; हिश्रौ १५, ४, १४; कप्राय ५, ५†; -ले माश्रौ ५,१,१, ४९,६,४१.

त्रयोदश-गत्र[c]- -त्रम् आमिगृ ३, ८, २ : ६; बौपि १, १५ : १६.

त्रयोदश-प(द> )दा[d]- -दे उनिसू ६ : २७.

त्रयोदश-पुरुष[e]- -षः वाधूश्रौ ४,११३ : २;३.

त्रयोदश-रात्र[f]- -त्रः बौश्रौ १६,३२ : १३; हिश्रौ १७, ५, ३५, -त्रम् आपश्रौ ५, २३, ३, -त्रे काश्रौ २४, १, १४; लाश्रौ १०,३,१२, निसू ९,१० : १४, १०, ३ : १५; -त्री काश्रौ ११,२,१; आपश्रौ २३, १, ७; हिश्रौ १८,१,११.

त्रयोदशरात्रा(त्र-आ)दि- -दिषु मीसू ८,२,२७.

त्रयोदश(श-ऋ)र्च- -र्चः शुअ ३, २४४, -र्चम् शुअ २, ३२१; ३९२, ऋअ ३, १०; -†र्चमयः अप ४६, १०, १०; ऋअ १९,२३.

त्रयोदश-समाप्ति- -प्त्याम् मैअ २५.

त्रयोदश-सूक्त[d]- -क्तौ अपं २ : १४.

त्रयोदशा(श-अ)क्षर[d]- -रम् वाधूश्रौ ४, १०० : ९;२२; -रौ ऋप्रा १६,५२.

त्रयोदश (श-आ)गम- -मात् शांश्रौ ९,१,१०.

त्रयोदशा(श-अ)रत्नि- -त्निः आपश्रौ २०, २, ७; हिश्रौ १४,१,२०; -त्निम् काश्रौ २०,१, ७; वाश्रौ ३,४,१,१४; कप २०, १,३; -त्न्यौ बौश्रौ १५,२ : ४.

त्रयोदशा(श-अ)ह- -हम् आज्यो १२, १; निसू ५, १२ : १०; -हम्ऽ-हम् निसू ५, १२ : ४०.

त्रयोदशि(क> )का[g]- -का आपशु ५,४; हिशु २,१२; -के बौशु १ : ४.

त्रयोदशिन्- -शिनोः ऋअ १,७,७, शुअ ५,४८.

त्रयो-विंशति- -तिः आश्रौ १२,५,१४; शांश्रौ; या २,१८; -तिम् आश्रौ ८, ९, ११; हिश्रौ १६,१,११[h].

त्रयोविंश[i]- -शः बौश्रौ १०,४२ : ७; -शम् माशृ १, ४,१४; काज्यो ९,७.

त्रयोविंशक[j]- -कम् अप्र ११,६.

त्रयोविंशति(क> )का[k]- -कया अप्र १४,१.

a) वैप १ द्र.। b) विप.। परिमाणे कन् प्र.। c) विप.। बस. उप. समासान्तः अच् प्र. वसं. (पा ५, ४, ७५)। d) विप.। बस.। e) विप.। तद्धितार्थे द्विस.। उत्तरेण संधिरार्ष.। f) = सत्र-विशेष-। g) विप. प्रमाणार्थे प्र.। h) शोधः पृ ७९४ a द्र.। i) वैप १,१०२३ k द्र.। j) पृ ७९४ f द्र.। k) पृ ७९४ g द्र.।

